प्रकाशकः—
जयकृष्णदास हरिदासगुप्तः,
चौखम्बा-संस्कृत-सीरिज आफिस,
पो० बाक्स नं० ८, बनारस

पुनर्मुद्रणादिकाः सर्वेऽधिकाराः प्रकाशकाधीनाः ।

Chowkhamba Sanskrit Series Office,
P. O. Box 8, Banaras.
1957.



मुद्रक—
विद्याविलास-प्रेस,
बनारस-१।

# प्राक्कथन

नवीन पाठ्यक्रम के अनुसार सिद्धान्तकौमुदी के प्रश्नों का स्वरूप भी बदल जाना चाहिए था परन्तु ५६ ई० तक के प्रश्नपत्र देखने से पता चलता है कि परीक्षक वही पुरानी पद्धति चला रहे हैं। प्रयोगों का उत्तर यदि सीधे-सादे रूप में दे दिया जाय तो परीक्षक सन्तुष्ट नहीं होंगे। क्योंकि जिन-जिन प्रयोगों के ऊपर शास्त्रार्थ का अंश छिपा रहता है परीक्षक प्रायः बार-बार उन्हें ही पूछते हैं। मैंने परीक्षक का अभिप्राय ध्यान में रखकर ही प्रश्नोत्तर लिखा है। अतएव यत्र-तत्र एक ही प्रश्न का उत्तर प्रकारान्तर से भी मुझे लिखना पड़ा है। प्रश्नगत नं० देखकर ही परीक्षार्थियों को प्रश्नों का उत्तर लिखना चाहिए।

विद्यार्थियों के हित को ध्यान में रखकर इस बार की प्रश्नोत्तरी का रूप ही बदल दिया गया है। प्रकरण के अनुसार प्रश्नोत्तर हो जाने से अध्ययन के समय से ही विद्यार्थी यदि इस प्रश्नोत्तरी का भी मनन करते रहेंगे तो गुरुमुख से पाठ श्रवण मात्र करने पर भी उन्हें ग्रन्थाशय सुखरूपेण समझ में आ जायगा और परीक्षा-महार्णव को तो पार कर ही जाँयगे।

जिस ई० में जो-जो प्रश्न पूछे गये हैं उन-उन प्रश्नों के आगे कोष्ठक में उन-उन ई० का अङ्क-निर्देश कर दिया गया है। प्रश्नों के अविकल रूप (प्रश्न-पत्र) १६४ पृष्ठ के आगे छापे गये हैं। विद्यार्थियों को चाहिए कि वे प्रश्नोत्तरी पढ़ते समय प्रश्न का स्वरूप प्रश्नपत्र में अवश्य देख लिया करें। इससे प्रश्नोत्तर समझने में उन्हें बड़ी सरलता होगी।

—लेखक

# प्रकरणसूची





व्याकरण-मध्यमा

# सौन्दर्य प्रश्नावली

## तृतीयं खण्डम्



ओङ्कारं मुरलीधरं प्रभुवरं वृन्दावनाधीश्वरं
भक्ताभीष्टफलप्रदं सुरवरैरासेव्यपादाम्बुजम् ।
वन्दे रासविहारिणं निजजनानन्दप्रदं माधवं
श्रीराधादिसमस्तगोपवनिता संसेव्यमानं प्रभुम् ॥

## अथ शैषिकप्रकरणम्

**'शेषे' इति लक्षणञ्चाधिकारश्चेति**(ई. ५०, ५२, ५४)—लक्षणं तावत् ग्रहण-चक्षुष्यादिष्वर्थेषूत्तरसूत्राऽनुपात्तेष्वणो विधायकम् । ननु लक्षणं तावद्व्यर्थम्, 'तस्येदम्' इत्यनेन चाक्षुषादीनां, 'संस्कृतं भक्षा' इत्यनेन दार्षदादीनां सिद्धेः । तथाऽधिकारोऽपि व्यर्थः, उत्तरसूत्रेषु निर्दिष्टानामर्थविशेषणानामपत्यादिचतुरर्थ्यन्तादन्यत्वस्य सिद्धत्वादिति चेदत आह—'शैषिकात् सरूपः शैषिको न' इति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकारस्तावदावश्यकः । शैषिकत्वप्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव 'शैषिकान्मतुबर्थीयात्' इत्यादिश्लोकं ज्ञापयति । अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारक-बोधनाय विधायकत्वमपि सुवचमिति दिक् ।

**'शेषे' इति सूत्रस्य विधित्वमधिकारित्वं वेति** ( ई. ३१, ३५, ३७, ४०, ४४ )—'शेषे' इति प्रदर्शितेषु ग्रहणाद्यर्थेषु उत्तरसूत्रैरनुपात्तेषु अणादिविधा-

---

टि० सुबन्तात्तद्धितोत्पत्तिरिति पक्षे सर्वत्र तद्धितान्तत्वात् प्रातिपदिसंज्ञायां सुब्लुग् भवति । प्रातिपदिकात्तद्धितोत्पत्तिरिति पक्षे तु न सुब्लुक आवश्यकतेति तत्त्वविदः ।

यकः। उत्तरसूत्रेष्वनुवृत्त्यर्थश्चेति सिद्धान्तः। नचोत्तरसूत्रेषु निर्दिष्टानामर्थविशेषाणाम्-अपत्यादिचतुरर्थ्यन्तादन्यत्वस्य सिद्धत्वाच्छेषाधिकारो व्यर्थ इति वाच्यम् ? 'तस्येदम्' इत्यादौ अपत्यादिचतुरर्थ्यन्तानां ग्रहणाऽभावाय तस्यावश्यकत्वात्। नच प्रदर्शितेषु ग्रहणाद्यर्थेषु 'तस्येदम्' इत्येव अणादिसिद्धेः 'शेषे' इत्यस्य विधित्वं नाश्रयणीयमिति वाच्यम् ? 'शौषिकान् मतुवर्थीयात्' इत्यादौ प्रदर्शितग्रहणाद्यर्थकानामपि ग्रहणलाभाय तदावश्यकत्वादिति दिक्।

**श्रावणः** ( ई. ३२ )—श्रवणेन गृह्यते इत्यर्थे 'शेषे' इति सूत्रेण अणि सुब्लुकि 'तद्धितेष्वचामादेः' इत्यनेन णित्वादादिवृद्धौ भत्वादलोपे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'श्रावणः' इति। श्रावणः=शब्दः।

**राष्ट्रियः** ( ई. ४८, ५०, ५२ )—राष्ट्रे जातः भवो वेत्याद्यर्थे 'राष्ट्रावारपाराद्घखौ' इति सूत्रेण घप्रत्यये घस्य इयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'राष्ट्रियः' इति।

**पारीणः** ( ई. ३६ )—पारे जातः इति विग्रहे 'अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्' इति वार्तिकेन खप्रत्यये तस्येनादेशे सुब्लुकि 'यस्येति च' इत्यलोपे नस्य णत्वे विभक्त्यादिकार्ये 'पारीणः' इति।

**कौक्षेयकः** ( ई. ५० )—कुक्षौ कोशे भवो वेत्यर्थे 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु' इति सूत्रेण अस्यर्थे कुक्षिशब्दात् ढकञ्प्रत्यये ढस्य एयादेशे 'यस्येति च' इत्यकारलोपे ञित्वादादिवृद्धौ विभक्तिकार्ये 'कौक्षेयकः' इति। असिरित्यर्थः।

**पाश्चात्त्यः** ( ई. ४८ )—पश्चात् जातः भवो वेत्याद्यर्थे 'दक्षिणापश्चात् पुरसस्त्यक्' इति सूत्रेण पश्चादित्यव्ययात् त्यक्प्रत्यये 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये 'पाश्चात्त्यः' इति।

**कान्थकम्** ( ई. ३७ )—वर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दात् 'वर्णौ वुक्' इति सूत्रेण वुकि सुब्लुकि कित्वादादिवृद्धौ वोरकादेशे आल्लोपे तद्धितान्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'कान्थकम्' इति।

**तत्रत्यः** ( ई. ४९ )—तस्मिन्निति 'तत्र'। तत्र भवः जातो वेत्याद्यर्थे 'अव्ययात्त्यप्' इति त्यपि विभक्तिकार्ये 'तत्रत्यः' इति। अत्र सूत्रे 'अमेहक्वतसित्रेभ्यः एव' इति परिगणनवार्तिकमपि न विस्मर्तव्यम्। औपरिष्टाद्भवः औपरिष्टः इत्यत्र न त्यप्।

**औपरिष्टः**—'अमेहक्कतसित्रेभ्यः एव' इति 'अव्ययात्त्यप्' इति सूत्रस्थपरिगणनवार्तिकस्य प्रत्युदाहरणमिदम् । अत्र उपरिष्टाद्भवः इत्यर्थे अणि 'अव्ययानां भमात्रे टिलोपः' इति वार्तिकेन टिलोपः । नचैवम् आरादित्यव्ययात् छप्रत्यये छस्य ईयादेशे विभक्तिकार्ये 'आरातीयः' इत्यत्रापि टिलोपः कुतो नेति वाच्यम्, 'अनित्योऽयं बहिषष्टिलोपविधानात्' इति मूले उक्तत्वात् ।

**अव्ययानामिति** ( ई. ३६ )—'अव्ययात्यप्' इति सूत्रे—'अमा, इह, क्व, तसि, त्र' एभ्य एव अव्ययेभ्यः त्यप्प्रत्ययः इत्यर्थकः—'अमेहक्कतसित्रेभ्य एव' इति परिगणनवार्तिकं पठितं मूलकृता । तत्र परिगणनं किमिति प्रश्नावसरे—उपरिष्टाद् भवः–'औपरिष्टः' इत्यत्र अणि सति टिलोपार्थम् 'भमात्रे टिलोपः' इति वार्तिकं पठितम् । तच्च वार्तिकम् , 'बाह्यः' इत्यत्र बहिषष्टिलोपविधानादनित्यम् । अत एव 'आरातीयः' इत्यादिसिद्धम् , अन्यथा आरादित्यव्ययाच्छस्य ईयादेशे टिलोपे 'आरीयः' इति स्यादिति दिक् ।

**निष्ट्यः** ( ई. ५५ )—निसि गतः इत्यर्थे 'निसो गते' इति वार्तिकेन गते गम्ये निस्शब्दात् त्यपि 'ह्रस्वात्तादौ तद्धिते' इति षत्वे तकारस्य ष्टुत्वे विभक्तिकार्ये 'निष्ट्यः' इति । चाण्डालादिरित्यर्थः ।

**श्वस्त्यम्** ( ई. ३९ )—'श्वस्' इत्यव्ययमनागते अह्नि वर्तते । तत्र भवः इत्यर्थे 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' इत्यनेन विभाषया त्यप्प्रत्यये अनुबन्धलोपे कृदन्तत्वात्सौ तस्य अमि पूर्वरूपे 'श्वस्त्यम्' इति ।

**काकतीरम्** ( ई. ५३ )—ककतीरे भवमित्यर्थे 'तीररूप्योत्तरपदादञ्यौ' इति सूत्रेण अञ्प्रत्यये आदि वृद्धौ विभक्तिकार्ये 'काकतीरम्' इति ।

**पौर्वशालः** ( ई. ४० )—पूर्वस्यां शालायां भवः इत्यर्थे 'दिक्पूर्वपदादसंज्ञायां ञः' इति सूत्रेण ञप्रत्यये सुब्लुकि ञित्वात् 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे तद्धितान्तत्वात् सौ रुत्वे विसर्गे 'पौर्वशालः' इति ।

**पौर्वमद्रः** ( ई. ४४ )—पूर्वेषु मद्रेषु भवः इत्यर्थे 'मद्रेभ्योऽञ्' इति सूत्रेण अञि प्रत्यये सुब्लुकि 'दिशोमद्राणाम्' इति मद्रपर्युदासात् ञित्वादादिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'पूर्वमद्रः' इति । ( मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात् 'तद्धितार्थ' इति सूत्रेणाऽत्र समासो बोध्यः ) ।

**शैवपुरम्** ( ई. ३४ )—उत्तरदेशे शिवपुरं नाम ग्रामविशेषः, तत्र भवः इत्यर्थे 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्' इति सूत्रेण अञि सुब्लुकि 'तद्धितेष्वचामादेः' इत्यनेन ञित्वादादिवृद्धौ भत्वात् 'यस्येति च' इत्यनेन अलोपे विभक्तिकार्ये 'शैवपुरम्' इति । ( समासस्येत्यन्तोदात्तः शिवपुरशब्दः ) ।

**माहिकप्रस्थः** ( ई. ५३ )—महिकप्रस्थनाम्नि ग्रामे भवः इत्यर्थे 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इत्यणि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**दाक्षाः** (ई. ३४)—दक्षस्य गोत्रापत्यमिति विग्रहे 'अत इञ्' इतीञ् प्रत्यये 'दाक्षिः' इति । ततः दाक्षेः छात्राः इति विग्रहे 'इञश्च' इति सूत्रेण अणि सुब्लुकि पर्यन्यवल्लक्षणप्रवृत्या णित्वादादिवृद्धौ भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये च कृते बहुवचने 'दाक्षाः' इति रूपं सिद्धम् ।

**न द्व्यचः प्राच्यभरतेष्विति** ( ई. ३९ )—अत्र सूत्रे भरतग्रहणं किमर्थमिति प्रश्ने आह मूले—भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् । तेन औद्दालकिः पिता, औद्दालकायनः पुत्रः, इत्यत्र 'इञः प्राचाम्' इति भरतेभ्यो लुक् न भवतीति 'आर्हादगोपुच्छे'ति सूत्रे कैयटः ।

**शालीयः** ( ई. ५० )—शालायां जात इत्याद्यर्थे 'त्यदादीनि च' इत्यनेन आदेरचो वृद्धिसंज्ञायां 'वृद्धाच्छः' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'शालीयः' इति ।

**एणीपचनीयः** ( ई. ४५ )—एणीपचने भवः इति विग्रहे 'एङ् प्राचां देशे' इति सूत्रेण विभाषया वृद्धिसंज्ञायां 'वृद्धाच्छः' इत्यनेन छप्रत्यये छस्य ईयादेशे भत्वादलोपे विभक्तिकार्ये 'ऐणीपचनीयः' इति ।

**भावत्कः** ( ई. ३८, ५०, ५२ )—भवतः इदमिति विग्रहे 'त्यदादीनि च' इति सूत्रेण आदेरचो वृद्धिसंज्ञायां 'भवतष्ठक्छसौ' इति सूत्रेण डवतुप्रत्ययान्ताद्वृद्धिसंज्ञकात् भवत् शब्दात् ठकि ठस्य कादेशे 'किति च' इत्यनेन आदिवृद्धौ विभक्तिकार्ये 'भावत्कः' इति । छस् प्रत्यये कृते तु छस्य ईयादेशे 'सिति च' इति पदत्वेन जश्त्वे विभक्तिकार्ये 'भवदीयः' इति ।

**काशिका** ( ई. ४१ )—काश्यां भवः इत्यर्थे 'काश्यादिभ्यष्ठञ्ञिठौ' इति सूत्रेण ञिठ्प्रत्यये अनुबन्धलोपे सुब्लुकि च कृते ठस्येकादेशे 'यस्येति च' इत्यनेन इवर्णस्य लोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'काशिका' इति । ठञ्प्रत्यये तु—ठञन्तान्ङीपि 'काशिकी' इति । अत्र ठञ्ञिठावित्यत्र इकार उच्चारणार्थः । उभयत्र ञकार एवाऽनुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थः इति बोध्यम् ।

**कास्तीरिकी** ( ई. ३१ )—कास्तीरं नाम वाहीकग्रामः, तत्र भवः इत्यर्थे सप्तम्यन्तात् कास्तीरशब्दात् 'वृद्धाच्छः' इति छप्रत्ययं बाधित्वा 'वाहीकग्रामेभ्यश्च' इति सूत्रेण ठञि सुब्लुकि पर्यन्यवल्लक्षणया ञित्वादादिवृद्धौ ठस्येकादेशे भत्वादल्लोपे अमादेशे ञित्वात् 'टिड्ढाणञ्—' इत्यादिना ङीपि विभक्तिकार्ये 'कास्तीरिकी' इति ।

**ऐरावतकः** (ई. ४२, ५१)—ऐरावताख्ये मरुप्रदेशे भवः इत्यर्थे 'धन्वयोपधाद्वुञ्' इति सूत्रेण वुञि सुब्लुकि पर्यन्यवल्लक्षणया ञित्वादादिवृद्धौ वोरकादेशे भत्वादल्लोपे विभक्तिकार्ये 'ऐरावतकः' इति । ऐरावतं धन्व, ऐरावताख्यं धन्वेत्यर्थः । 'धन्व' इति मरुप्रदेशस्य संज्ञा । यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण धन्वशब्दस्य पुंस्त्वमुक्तं, तथापि 'अष्टकं नाम धन्व' इति भाष्यात् नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम् ।

**जनपदतदवध्योश्चेति** ( ई. २६ )—जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद् वुञ् स्यादिति सूत्रार्थः । आदर्शो नाम जनपदः, तत्र भवः 'आदर्शकः' इति, त्रिगर्तो नाम जनपदविशेषस्याऽवधिः, तत्र भवः 'त्रैगर्तकः' इति चोदाहरणे । नच प्रकृतिसूत्रे—सचाऽसौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्यते, ततश्च जनपदत्वादेव सिद्धे अवधिग्रहणं व्यर्थमिति वाच्यम्, वुञेव यथास्यान्नाऽन्यदित्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दात् 'गर्तोत्तरपदादि'ति च्छो न भवति, किन्तु 'अवृद्धादपि बहुवचनविषयात्' इत्युत्तरसूत्रेण वुञेवेति । सूत्रे जनपदावधिवाचिनः उदाहरणं तु—'श्यामायनकः' इत्यादि बोध्यम् ।

**आङ्गकः** ( ई. ३०, ४२ )—अङ्गा जनपदो भक्तिरस्य—आङ्गकः । अङ्गाः क्षत्रिया भक्तिरस्य—आङ्गकः । इति विग्रहद्वयं मूले प्रदर्शितं, तत्र प्रथमं दृष्टान्तार्थम् । अयम्भावः—अङ्गा जनपदो भक्तिरस्येत्यर्थे 'जनपदतदवध्योश्च' इति सूत्रेण वुञि प्रत्यये 'आङ्गकः' इति सिद्धं रूपं यथा, तथा—अङ्गदेशवाचिनः क्षत्रिया अङ्गा भक्तिरस्येत्यर्थे क्षत्रियवाचकात् 'अङ्ग' शब्दात् 'जनपदिनां जनपदवत् सर्वं

जनपदेन समानशब्दानां बहुवचने' इत्यनेन वुञि ञित्वादादिवृद्धौ वोरकादेशे विभक्तिकार्ये 'आङ्गकः' इति सिद्धं भवति।

**दार्वकः** ( ई. ३७ )—'दार्वाः' इति बहुवचनान्तो जनपदविशेषे वर्त्तते। तत्र भवः इत्यर्थे 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रेण वृद्धाज्जनपदात् सप्तम्यन्तात् दार्वशब्दात् वुञि अनुबन्धलोपे सुब्लुकि वोरकादेशे पूर्वरूपे तद्धितान्तत्वात्सौ रुत्वे विसर्गे 'दार्वकः' इति।

**वार्तनः** ( ई. ३८ )—वर्तनी च वर्तनी च वर्तनी चेत्येकशेषे 'वर्तन्यः' इति। तासु भवः इति विग्रहे भवार्थे अणि सुब्लुकि णित्वादादिवृद्धौ इवर्णस्य लोपे विभक्तिकार्ये 'वार्तनः' इति। 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रस्य विषयग्रहणस्य प्रत्युदाहरणमेतत्। तत्र हि—विषयग्रहणाऽभावे एकशेषेण बहुत्वे सति अत्राऽपि वुञो माभूदिति तद्भावः।

**बाहुवर्तकः** ( ई. ४१ )—बहुवर्ते भवः इति विग्रहे 'कच्छाग्निवक्त्रवर्तोत्तरपदात्' इति सूत्रेण वुञि सुब्लुकि वोरकादेशे ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'बाहुवर्तकः' इति।

**काच्छकं हसितं** ( ई. ३१ )—कच्छे जातमित्यर्थे 'मनुष्यतत्स्थयोर्वुञ्' इति सूत्रेण वुञि सुब्लुकि ञित्वादादिवृद्धौ वोरकादेशे भत्वादलोपे तद्धितान्तत्वात्सौ तस्य पूर्वरूपे 'काच्छकम्' इति। हसितमिति शेषः।

**गहीयः** ( ई. ४८ )—गहो देशविशेषः, तत्र भवः इत्यर्थे 'गहादिभ्यश्च' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'गहीयः' इति।

**राजकीयम्** ( ई. ४३ )—राज्ञः इदमिति विग्रहे 'राज्ञः क च' इति सूत्रेण छप्रत्यये ककारश्चान्तादेशे सुब्लुकि छस्येयादेशे पदत्वान्नलोपे विभक्तिकार्ये 'राजकीयम्' इति।

**ब्राह्मणकीयः** ( ई. ५३ )—ब्राह्मणको नाम जनपदः, यत्र ब्राह्मणाः आयुधजीविनः। तत्र जातः इति विग्रहे 'त्यदादीनि च' इत्यनेन वृद्धिसंज्ञायां 'वृद्धादकेकान्तखोपधात्' इति सूत्रेण अकन्ताद् वृद्धसंज्ञकात् देशवाचिनः ब्राह्मणकशब्दात् छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'ब्राह्मणकीयः' इति सिद्धं रूपं निष्पन्नम्।

**तव युवयो युष्माकं वा अयमिति** ( ई. ३७, ४१, ४६ )—युवयोः युष्माकं वा अयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति सूत्रेण षष्ठी-द्विवचनान्तात् बहुवचनान्ताच्च 'युष्मद्' शब्दात् छप्रत्यये तु 'आयनेयीनीयियः'—इत्यादि सूत्रेण छस्य ईयादेशे, सुब्लुकि सति 'निमित्ताऽपाये' नैमित्तिकस्य युवादेशस्याऽपि निवृत्तौ तद्धितान्तत्वात् सौ रुत्वे विसर्गे 'युष्मदीयः' इति भवति।

तस्मिन्नेव सूत्रेण पूर्वोक्तविग्रहे खञ्प्रत्ययकृते तु—खस्य ईनादेशे सुब्लुकि 'तस्मिन्नणि च युष्माकास्माकौ' इत्यनेन युष्माकादेशे ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे णत्वे विभक्त्यादिकार्ये 'यौष्माकीणः' इति।

एवं पूर्वोक्तविग्रहे तस्मिन्नेव सूत्रेण अन्यतरस्यां ग्रहणसामर्थ्यादणि कृते 'तस्मिन्नणि च' इति सूत्रेण युष्माकादेशे णित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'यौष्माकः' इति।

**तव अयमिति विग्रहे तु**—'युष्मदस्मदोरन्यतरस्यां खञ्च' इति सूत्रेण खञि प्रत्यये सुब्लुकि 'तवकममकावेकवचने' इति सूत्रेण एकार्थवाचियुष्मच्छब्दस्य तवकादेशे ञित्वादादिवृद्धौ खस्य ईनादेशे भत्वादलोपे विभक्तिकार्ये 'तावकीनः' इति।

पूर्वोक्तसूत्रेणैवाऽन्यतरस्यां ग्रहणसामर्थ्यादणि कृते तु—'तावकः' इति भवति।

छप्रत्यये कृते तु—सुब्लुकि छस्य ईयादेशे 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य त्वादेशे विभक्तिकार्ये 'त्वदीयः' इति। एवमेव—आवयोः अस्माकं वा अयमिति विग्रहे 'अस्मदीयः, आस्माकीनः, आस्माकः, इति रूपाणि बोध्यानि।

**मदीयः** (ई. ३४)—मम अयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति सूत्रेण छप्रत्यये सुब्लुकि छस्येयादेशे 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य मादेशे विभक्तिकार्ये 'मदीयः' इति। तस्मिन्सूत्रेणैव खञि प्रत्यये तु—'तवकममकावेकवचने' इत्यनेन ममकादेशे ञित्वादादिवृद्धौ खस्य ईनादेशे भत्वादलोपे विभक्तिकार्ये 'मामकीनः' इति तस्मिन्नेव सूत्रेण अन्यतरस्यां ग्रहणसामर्थ्यादणि कृते तु 'मामकः' इत्यपि भवतीति बोध्यम्।

**तत्र-मम अयमिति विग्रहे**—मामकीनः, मामकः, मदीयः, इति रूपाणि ज्ञेयानि।

**सायम्प्रातिकः** ( ई. ५४ )—सायम्प्रातर्भवः इति विग्रहे 'कालाट्ठञ्' इति ठञि पर्यन्यवल्लक्षणया आदि वृद्धौ ठस्य इकादेशे 'अव्ययानां भमात्रे टिलोपः' इति

जनपदेन समानशब्दानां बहुवचने' इत्यनेन वुञि ञित्वादादिवृद्धौ वोरकादेशे विभक्तिकार्ये 'आङ्गकः' इति सिद्धं भवति।

**दार्वकः** ( ई. ३७ )—'दार्वाः' इति बहुवचनान्तो जनपदविशेषे वर्त्तते। तत्र भवः इत्यर्थे 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रेण वृद्धाज्जनपदात् सप्तम्यन्तात् दार्वशब्दात् वुञि अनुबन्धलोपे सुब्लुकि वोरकादेशे पूर्वरूपे तद्धितान्तत्वात्सौ रुत्वे विसर्गे 'दार्वकः' इति।

**वार्तनः** ( ई. ३८ )—वर्तनी च वर्तनी च वर्तनी चेत्येकशेषे 'वर्तन्यः' इति। तासु भवः इति विग्रहे भवार्थे अणि सुब्लुकि णित्वादादिवृद्धौ इवर्णस्य लोपे विभक्तिकार्ये 'वार्तनः' इति। 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रस्य विषयग्रहणस्य प्रत्युदाहरणमेतत्। तत्र हि—विषयग्रहणाऽभावे एकशेषेण बहुत्वे सति अत्राऽपि वुञो माभूदिति तद्भावः।

**बाहुवर्तकः** ( ई. ४१ )—बहुवर्ते भवः इति विग्रहे 'कच्छाग्निवक्त्रवर्तोत्तरपदात्' इति सूत्रेण वुञि सुब्लुकि वोरकादेशे ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'बाहुवर्तकः' इति।

**काच्छकं हसितं** ( ई. ३१ )—कच्छे जातमित्यर्थे 'मनुष्यतत्स्थयोर्वुञ्' इति सूत्रेण वुञि सुब्लुकि ञित्वादादिवृद्धौ वोरकादेशे भत्वादलोपे तद्धितातत्वात्सौ तस्य पूर्वरूपे 'काच्छकम्' इति। हसितमिति शेषः।

**गहीयः** ( ई. ४८ )—गहो देशविशेषः, तत्र भवः इत्यर्थे 'गहादिभ्यश्च' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'गहीयः' इति।

**राजकीयम्** ( ई. ४३ )—राज्ञः इदमिति विग्रहे 'राज्ञः क च' इति सूत्रेण छप्रत्यये ककारश्चान्तादेशे सुब्लुकि छस्येयादेशे पदत्वान्नलोपे विभक्तिकार्ये 'राजकीयम्' इति।

**ब्राह्मणकीयः** ( ई. ५३ )—ब्राह्मणको नाम जनपदः, यत्र ब्राह्मणाः आयुधजीविनः। तत्र जातः इति विग्रहे 'त्यदादीनि च' इत्यनेन वृद्धिसंज्ञायां 'वृद्धादकेकान्तखोपधात्' इति सूत्रेण अकन्ताद् वृद्धसंज्ञकात् देशवाचिनः ब्राह्मणकशब्दात् छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'ब्राह्मणकीयः' इति सिद्धं रूपं निष्पन्नम्।

**तव युवयो युष्माकं वा अयमिति** ( ई. ३७, ४१, ४६ )—युवयोः युष्माकं वा अयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति सूत्रेण षष्ठी-द्विवचनान्तात् बहुवचनान्ताच्च 'युष्मद्' शब्दात् छप्रत्यये तु 'आयनेयीनीयियः'—इत्यादि सूत्रेण छस्य ईयादेशे, सुब्लुकि सति 'निमित्ताऽपाये' नैमित्तिकस्य युवादेशस्याऽपि निवृत्तौ तद्धितान्तत्वात् सौ रुत्वे विसर्गे 'युष्मदीयः' इति भवति ।

तस्मिन्नेव सूत्रेण पूर्वोक्तविग्रहे खञ्प्रत्ययकृते तु—खस्य ईनादेशे सुब्लुकि 'तस्मिन्नणि च युष्माकास्माकौ' इत्यनेन युष्माकादेशे ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे णत्वे विभक्त्यादिकार्ये 'यौष्माकीणः' इति ।

एवं पूर्वोक्तविग्रहे तस्मिन्नेव सूत्रेण अन्यतरस्यां ग्रहणसामर्थ्यादणि कृते 'तस्मिन्नणि च' इति सूत्रेण युष्माकादेशे णित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'यौष्माकः' इति ।

**तव अयमिति विग्रहे तु**—'युष्मदस्मदोरन्यतरस्यां खञ्च' इति सूत्रेण खञि प्रत्यये सुब्लुकि 'तवकममकावेकवचने' इति सूत्रेण एकार्थवाचियुष्मच्छब्दस्य तवकादेशे ञित्वादादिवृद्धौ खस्य ईनादेशे भत्वादलोपे विभक्तिकार्ये 'तावकीनः' इति ।

पूर्वोक्तसूत्रेणैवाऽन्यतरस्यां ग्रहणसामर्थ्यादणि कृते तु—'तावकः' इति भवति ।

छप्रत्यये कृते तु—सुब्लुकि छस्य ईयादेशे 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य त्वादेशे विभक्तिकार्ये 'त्वदीयः' इति। एवमेव—आवयोः अस्माकं वा अयमिति विग्रहे 'अस्मदीयः, आस्माकीनः, आस्माकः, इति रूपाणि बोध्यानि ।

**मदीयः** (ई. ३४)—मम अयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति सूत्रेण छप्रत्यये सुब्लुकि छस्येयादेशे 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य मादेशे विभक्तिकार्ये 'मदीयः' इति । तस्मिन्सूत्रेणैव खञि प्रत्यये तु—'तवकममकावेकवचने' इत्यनेन ममकादेशे ञित्वादादिवृद्धौ खस्य ईनादेशे भत्वादलोपे विभक्तिकार्ये 'मामकीनः' इति तस्मिन्नेव सूत्रेण अन्यतरस्यां ग्रहणसामर्थ्यादणि कृते तु 'मामकः' इत्यपि भवतीति बोध्यम् ।

**तत्र-मम अयमिति विग्रहे**—मामकीनः, मामकः, मदीयः, इति रूपाणि ज्ञेयानि ।

**सायम्प्रातिकः** ( ई. ५४ )—सायम्प्रातर्भवः इति विग्रहे 'कालाट्ठञ्' इति ठञि पर्यन्यवल्लक्षणया आदि वृद्धौ ठस्य इकादेशे 'अव्ययानां भमात्रे टिलोपः' इति

टिलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्। 'सायञ्चिरम्' इत्यनेनात्र ट्युट्युलौ तु न भवतः 'नस्तद्धिते' इति भाष्ये तथा प्रयोगदर्शनात्। यत्तु शार्वरस्येति, औषसराग। इति, समानकालीनं प्राक्कालीनमित्यादि च कालिदासादयः प्राहुः तत् पाणिनिव्याकरणबहिर्भूतप्रयोगाः इत्यवसेयम्। भाष्ये शार्वरिकस्येति, औषसिकेति, समानकालिकं, प्राक्कालिकं चेति प्रयोगदर्शनात्।

**शारदिकम्** ( ई. ५३ )—शरदि ऋतौ भवमित्यर्थे 'श्राद्धे शरदः' इति सूत्रेण ठञि ठस्य इकादेशे आदिवृद्धौ, विभक्तिकार्ये 'शारदिकम्' इति। श्राद्धमिति शेषः। ननु 'तत्र जातः' इति सूत्रं यावत् कालाधिकारः इत्युक्तत्वादत्र 'कालाट्ठञ्' इत्येव ठञ् कुतो नेति चेन्न, 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणोऽपवादकत्वेन 'श्राद्धे शरदः' इति सूत्रारम्भस्यावश्यकत्वात्।

**शारदो रोगः** ( ई. ३१ )—शरदि ऋतौ भवः इत्यर्थे 'विभाषा रोगातपयोः' इति सूत्रेण विभाषया ठञि सुब्लुकि ञित्वादादिवृद्धौ ठस्य इकादेशे भत्वादलोपे विभक्तिकार्ये 'शारदिकः' इति। ठञ्प्रत्ययाऽभावे अणि सुब्लुकि णित्वादादिवृद्धौ भत्वादलोपे स्वादिकार्ये 'शारदः' इति। रोगः इति शेषः।

**द्वारादिगणे इति** ( ई. ३८ )—'द्वारादीनां च' इति सूत्रे परस्य वृद्धिरिति नानुवर्तते इति कस्येत्सूत्रे भाष्ये निरूपितम्। इह तदादिग्रहणमपि। एवञ्च 'स्वग्रामस्वाध्याययोः पाठो नियमार्थः—'स्वशब्दादेतयोरेवेति। तेन 'स्वार्थिकाः' 'स्वाभाविकम्' 'स्वाराज्यम्' इत्यादि सिद्धमिति 'द्वारादीनां चे'ति सूत्रे भाष्ये ध्वनितमिति बोध्यम्।

**शौवस्तिकम्** ( ई. ३५, ३८, ४१, ४४, ४६ )—'श्वस्' इत्यव्ययं तत्र जातः इत्यर्थे 'श्वसस्तुट् च' इति सूत्रेण ठञ्प्रत्यये तस्य तुडागमे च कृते अनुबन्धलोपे ठस्येकादेशे 'द्वारादीनां च' इत्यनेन वकारात् पूर्वमैजागमे विभक्त्यादिकार्ये 'शौवस्तिकम्' इति।

**तैषम्** ( ई. ३७, ५० )—तिष्ये भवादिरित्यर्थे तिष्यशब्दात् 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणि आदिवृद्धौ 'यस्येति च' इति अकारलोपे 'तिष्यपुष्ययोर्नक्षत्राणि' इति यलोपे विभक्तिकार्ये 'तैषम्' इति। 'तिष्ये जातः' इत्यर्थे तु 'श्रविष्ठाफल्गुनी' इति सूत्रेण यलोपो बोध्यः।

**प्रावृषेण्यः** ( ई. ४९ )—प्रावृट् वर्षर्तुः। तत्र भवादिरित्यर्थे 'प्रावृष एण्यः' इति सूत्रेण एण्यप्रत्यये विभक्तिकार्ये 'प्रावृषेण्यः' इति । प्राविषि जातः इत्यर्थे तु 'प्रावृषष्ठप्' इति ठपि ठस्य इकादेशे विभक्तिकार्ये 'प्राविषिकः' इति भवति ।

**हैमनम्** (ई. ५२, ५५ )—हेमन्ते भवमित्याद्यर्थे 'सर्वत्राण् च तलोपश्च' इति सूत्रेण अणि तलोपे च कृते णित्वादादिवृद्धौ विभक्तिकार्ये 'हैमनः' इति । टिलोपस्तु न 'अन्' इति प्रकृतिभावात् । तकारमात्रलोपपक्षे तु 'यस्येति च' इत्यकारलोपे सति तलोपो बोध्यः । अत्र पक्षे अल्लोपस्य स्थानिवत्वाट्टिलोपो नेति बोध्यम् । ननु 'सर्वत्र अण् तलोपश्च' इत्येव सिद्धे सूत्रे प्रथमचकारो व्यर्थः इति चेन्न, चकारात् पक्षे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति सूत्रेण अणविधानस्य जागरूकत्वात् । तस्मिन् पक्षे अणि सति 'हैमन्तम्' इति भवति ।

**चिरन्तनम्** ( ई. ४८ )—चिरं भवः इत्यर्थे 'सायंचिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ तुट् च' इति सूत्रेण ट्युप्रत्यये 'अनद्यतने' इत्यादिनिर्देशात् तुटः प्रागेव अनादेशे कृते तुटि विभक्त्यादिकार्ये 'चिरन्तनम्' इति ।

**अपरहैमनः** ( ई. ५१ )—हेमन्तस्य अपरम् अपरहेमन्तः, तत्र जातादि-रित्यर्थे 'सर्वत्राण् च तलोपश्च' इत्यणि तलोपे च कृते 'अवयवादृतोः' इत्युत्तरपदादि-वृद्धौ विभक्तिकार्ये 'अपरहैमनः' इति ।

**पौर्ववार्षिकः** ( ई. ३२ )—पूर्वासु वर्षासु जातः इति विग्रहे 'कालाट्ठञ्' इति सूत्रेण ठञि सुब्लुकि ठस्येकादेशे ञित्वादादिवृद्धौ भत्वादालोपे विभक्तिकार्ये 'पौर्ववार्षिकः' इति भवति । 'अवयवादृतोः' इत्यनेन उत्तरपदादिवृद्धिस्तु न, पूर्वपदस्य अवयववृत्तित्वाऽभावादिति दिक् ।

**ऋतो वृद्धिमदिति** ( ई. ३३, ३८ ४१ )—अयम्भावः ननु पूर्वासु वर्षासु भवः 'पौर्ववार्षिकः' इत्यत्र पूर्वपदस्य अवयववृत्तित्वाभावात् 'अवयवादृतोः' इति सूत्रेण उत्तरपदादिवृद्धेरभावेऽपि कथमिह 'वर्षाभ्यष्ठक्' इति ठगिति चेदत आह—'ऋतो वृद्धिमदि'ति । अवयववाचकानां शब्दानामुपरिस्थितादृतुवाचकाद्वृद्धिनिमित्तक-प्रत्ययविधाने कर्त्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन 'येन विधिरि'ति सूत्रभाष्यस्थित-वचनेन पूर्वत्र पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथा च 'पूर्ववार्षिकः' इत्यत्र 'पूर्वहैमनः' इत्यत्र च मुख्योदाहरणे 'वर्षाभ्यष्ठक्' 'सर्वत्राऽण चे'ति ठगणौ सिद्धौ । 'पौर्ववर्षिकः' इत्यत्र तु तदन्तविधिर्नास्ति, पूर्वासु वर्षास्विति सामानाधि-

रणेन पूर्वशब्दस्याऽवयववृत्तित्वाभावात्। एवं च 'पौर्ववर्षिकः' इति प्रत्युदाहरणे 'कालाट्ठञ्' इति ठञेव, न तु ठक्। ठग्—ठञोस्तु स्वरे भेदः।

**सुपाञ्चालकः** ( ई. ४३ )—सुपाञ्चालेषु भवः इत्यर्थे 'जनपदतदवध्योश्च' इति सूत्रेण वुञि, नच 'अवृद्धादपी'त्युक्तत्वेन प्रत्ययविधौ तदन्तविधिप्रतिषेधात् 'सुपाञ्चाल' शब्दस्य जनपदवाचित्वाऽभावेन कथं वुञ्, इति वाच्यम्? सु, सर्व, अर्ध, दिक्शब्द—एभ्यः परस्य जनपदवाचिनः उपरि प्रत्ययविधौ तदन्तविधिरित्यर्थकेन—'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' इति 'येन विधिरि'ति सूत्रभाष्यपठितवचनेन तदन्तविधानात्। एवञ्च वुञि कृते सुब्लुकि ञित्वात् प्राप्तामादिवृद्धिं बाधित्वा 'सुसर्वार्धाज्जनपदस्य' इति सूत्रेण पर्जन्यवल्लक्षणया उत्तरपदस्य वृद्धौ चोरकादेशे भत्वादल्लोपे विभक्तिकार्ये 'सुपाञ्चालकः' इति।

**पौर्वपञ्चालः** ( ई. ३३ )—पूर्वपञ्चालानामयमिति विग्रहे अणि णित्वादादिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'पौर्वपञ्चाल' इति। अत्र पूर्वशब्दो देशवाची कालवाचीत्यपि केचित्तेन 'दिशोऽमद्राणाम्' इति सूत्रे दिक्शब्दपदेन दिग्वाचकशब्दस्यैव दिक्शब्दस्य ग्रहणाद् वृद्धिर्नेत्यस्य सूत्रस्य प्रत्युदाहरणमिदमिति बोध्यम्।

**पूर्वैषुकामशमः** ( ई. ३६, ५१, ५२ )—पूर्वेषुकामशम्यां भवः इति विग्रहे 'तत्र भवः' इत्यणि सुब्लुकि 'प्राचां ग्रामनगराणाम्' इति सूत्रेण उत्तरपदादिवृद्धौ 'यस्येति च' इत्यनेन इवर्णस्य लोपे विभक्त्यादिकार्ये 'पूर्वैषुकामशमः' इति। संज्ञात्वादत्र 'दिक्पूर्वपदादसंज्ञायां ञः' इत्यनेन ञप्रत्ययो नेति बोध्यम्।

**पूर्वपाटलिपुत्रकः** ( ई. ३१ )—पूर्वपाटलिपुत्रेषु भवः इत्यर्थे 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रेण वुञि सुब्लुकि ञित्वात्प्राप्तामादिवृद्धिं बाधित्वा 'प्राचां ग्रामनगराणाम्' इति सूत्रेण नगरवाच्युत्तरपदाङ्गावयवस्य वृद्धौ भत्वादलोपे विभक्तिकार्ये 'पूर्वपाटलिपुत्रकः' इति। पूर्वपदस्य वृद्धिनिवृत्त्यर्थमेवात्रोत्तरपदस्य वृद्धिरितिबोध्यम्।

**आमावास्यः** ( ई. ५५ )—अमावास्यायां जातः इति विग्रहे 'अमावास्याया वा' इति सूत्रेण वुनि चोरकादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'अमावास्यकः' इति। पक्षे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणि वृद्धौ आकारलोपे विभक्त्यादिकार्ये 'आमावास्यः' इति।

**अमावास्यः** ( ई. ५५ )—अमावास्यायां जातः इत्यर्थे 'अ च' इति सूत्रेण अकारप्रत्यये 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'अमावास्यः' इति।

**श्रविष्ठेति** ( ई. ३७ )—'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक्' इति सूत्रस्वरूपम्। श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विसाखा, अषाढा, बहुला—एतेभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्यस्य लुक्स्यादिति सूत्रार्थः। श्रविष्ठासु जातः इति विग्रहे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण् प्रत्ययस्य उक्तसूत्रेण लुकि 'लुक्तद्धितलुकि' इत्यनेन स्त्रीप्रत्ययस्य निवृत्तौ स्वादिकार्ये 'श्रविष्ठः' इति प्रथमोदाहरणं ज्ञेयम्। एवं—फल्गुन्योर्जातः—'फल्गुनः'। अनुराधासु जातः—'अनुराधः'। स्वात्यां जातः—'स्वातिः'। तिष्ये जातः—'तिष्यः'। पुनर्वस्वोर्जातः—'पुनर्वसुः'। हस्ते जातः—'हस्तः'। विशाखयोर्जातः—'विशाखः'। आषाढासु जातः—'अषाढः'। बहुलासु जातः—'बहुलः' इत्युदाहरणानि बोध्यानि।

**श्रविष्ठः** ( ई. ४९, ५२ )—श्रविष्ठासु जातः इति विग्रहे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणि 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' इति अणो लुकि 'लुक् तद्धितलुकि' इति उपसर्जनस्त्रीप्रत्ययस्य निवृत्तौ विभक्तिकार्ये 'श्रविष्ठः' इति। ( 'लुक् तद्धितलुकि' इति सूत्रे अप्रधानमेवोपसर्जनम्, न तु शास्त्रीयम्, असम्भवादिति न विस्मर्तव्यम् )

**रोहिणी** ( ई. ४२ )—रोहिणीशब्दोऽयमव्युत्पन्ने नक्षत्रविशेषे रूढः। तत्र रोहिण्यां जाता-'रोहिणी'। अत्र 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इति वार्तिकेन रोहिणी शब्दात्परस्य जातार्थकाऽण्प्रत्ययस्य लुकि सति स्त्रीप्रत्ययस्याऽपि निवृत्तौ पिप्पल्यादेराकृतिगणत्वात् पुनर्ङीषि विभक्त्यादिकार्ये 'रोहिणी' इति।

**स्रौघ्नः** ( ई. ५२ )—स्रुघ्ने प्रायेण ( बाहुल्येन ) भवति स्रौघ्नः। अत्र 'प्रायभवः' इति सूत्रेण अणि आदिवृद्धौ विभक्तिकार्ये 'स्रौघ्नः' इति।

**औपनीविकः** ( ई. ४१, ४८ )—नीवेः समीपमुपनीवि ( सामीप्येऽव्ययीभावः )। तत्र भवः इत्यर्थे 'उपजानूपकर्णोपनीवेष्ठक्' इति सूत्रेण ठकि सुब्लुकि ठस्य इकादेशे कित्वात् 'किति च' इत्यादिवृद्धौ 'यस्येति च' इतीकारलोपे विभक्त्यादिकार्ये 'औपनीविकः' इति।

**ग्रैष्मकम्** ( ई. ५१ )—ग्रीष्मे भवति ग्रैष्मकम्। अत्र 'ग्रीष्मवसन्तादन्यतरस्याम्' इति सूत्रेण वुञि वोरकादेशे ञित्वादादिवृद्धौ विभक्तिकार्ये 'ग्रैष्मकम्' इति। पक्षे 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यणि सति 'ग्रैष्मम्' इत्यपि भवति।

**मासिकम्** (ई. ४१)—मासे देयं ऋणं 'मासिकम्' 'सप्तम्यन्तात् कालवाचिनो देयमित्यर्थे यथाविहितं प्रत्ययाः स्युः' इत्यर्थक—'देयमृणे' इति सूत्रेण ठञि सुब्लुकि अनुबन्धलोपे पर्यन्यवल्लक्षणया ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे स्वादि-कार्ये 'मासिकम्' इति ।

**माद्रनगरः** ( ई. ४३ )—उदग्देशे मद्रनगरं नाम कश्चिन्नगरमस्तीत्यर्थः । 'प्राचां नगरान्ते' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि 'प्राचां' ग्रहणाऽभावे मद्रनगरमुदक्षु, तत्र भवः 'माद्रनगरः' इत्यत्राऽप्युत्तरपदस्य वृद्धिः स्यादिति भावः ।

**दार्तेयम्** ( ई. ४९ )—दृतौ भवमित्यर्थे 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' इति सूत्रेण ढञि ढस्य एयादेशे आदिवृद्धौ रपरत्वे 'यस्येति च' इति इकारलोपे विभक्ति-कार्ये 'दार्तेयम्' इति ।

**आस्तेयम्** ( ई. ३४ )—अस्तीति विभक्तिप्रतिरूपकमव्ययम्, तत्र भवः इत्यर्थे 'दृतिकुक्षिकलशिबस्त्यस्त्यहेर्ढञ्' इति सूत्रेण ढञ्प्रत्यये ढस्य एयादेशे भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'आस्तेयम्' इति ।

**ग्रैवेयम्** ( ई. ५५ )—ग्रीवायां भवमित्यर्थे 'ग्रीवाभ्योऽण् च' इति सूत्रेण अणि आदिवृद्धौ 'यस्येति च' इत्याकारलोपे 'ग्रैवम्' इति । चकारात् ढञ् प्रत्यये कृते ढस्य एयादेशे आकारलोपे 'ग्रैवेयम्' इति ।

**गाम्भीर्यम्** ( ई. ४९ )—गम्भीरे भवमित्यर्थे 'गम्भीराञ्ञ्यः' इति सूत्रेण ञ्यप्रत्यये आदिवृद्धौ 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'गाम्भीर्यम्' इति ।

**ऐहलौकिकम्** ( ई. ४४ )—इह लोके भवमिति विग्रहे ठञि 'अनुशतिका-दीनां च' इत्यनेनोभयपदवृद्धौ ठस्य इकादेशे विभक्तिकार्ये 'ऐहलौकिकम्' इति ।

**शांशपः** ( ई. २७ )—शिंशपायाः विकारः इति विग्रहे शिंशपाशब्दस्य पलाशादौ पाठात् 'पलाशादिभ्यो वा' इति सूत्रेण अञि अनुबन्धलोपे सुब्लुकि च कृते 'देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्' इत्यनेन आदिवृद्धिं प्रबाध्य इकार-स्याकारे 'यस्येति च' इत्यलोपे विभक्त्यादिकार्ये 'शांशपः' ( चमसः ) इति ।

**श्रायसम्** ( ई. ४६ )—श्रेयसि भवमिति विग्रहे 'तत्र भवः' इत्यणि 'देवकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्' इत्यनेन एकारस्याकारे विभक्तिकार्ये । 'श्रायसम्' इति ।

**जिह्वामूलीयम्** (ई. ५४)—जिह्वामूले भवमित्यर्थे 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'जिह्वामूलीयम्' इति ।

**कवर्गीयो वर्णः** ( ई. ५३ )—कादिवर्गे भवो वर्णः कवर्गीयः । 'वर्णान्ताच्च' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'कवर्गीयः' इति । 'अशब्दे यत्खावन्यतरस्याम्' इति सूत्रे 'अशब्दे' इत्युक्तत्वादत्र यत्खौ नेति ।

**सौपम्** ( ई. ५३ )—सुप्सु भवमित्यर्थे 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः' इति सूत्रेण अणि आदिवृद्धौ विभक्तिकार्ये 'सौपम्' इति ।

**षात्वणिकः** ( ई. ४२ )—षत्वणत्वयोर्विधायकं शास्त्रं—षत्वणत्वम्, तस्य व्याख्यनस्तत्र भवो वेति विग्रहे 'बह्वचोऽन्तोदात्ताट्ठञ्' इत्यनेन ठञ्प्रत्यये सुब्लुकि ञित्वादादिवृद्धौ ठस्येकादेशे विभक्तिकार्ये 'षात्वणिकः इति ।

**आग्निष्टोमिकः** ( ई. ४५ )—अग्निष्टोमस्य व्याख्यानः, तत्र भवो वेति विग्रहे 'क्रतुयज्ञेभ्यश्च' इति सूत्रेण ठञ्प्रत्यये सुब्लुकि ठस्येकादेशे ञित्वादादिवृद्धौ भत्वादल्लोपे विभक्तिकार्ये 'आग्निष्टोमिकः' इति ।

**पाकयज्ञिकः** ( ई. ४० ) औपासनाग्निसाध्याः पार्वणस्थालीपाकादयः—'पाकयज्ञाः' तेषां व्याख्यानः, तेषु भवः इति वाऽर्थे 'क्रतुयज्ञेभ्यश्च' इति सूत्रेण ठञ्प्रत्यये सुब्लुकि ठस्येकादेशे ञित्वात् 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे स्वादिकार्ये 'पाकयज्ञिकः' इति ।

**वासिष्ठिकः** ( ई. ३६ )—वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वेति विग्रहे 'अध्यायेष्वेवर्षेः' इति सूत्रेण ठञ्प्रत्यये सुब्लुकि ठस्येकादेशे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे स्वादिकार्ये 'वासिष्ठिकः' इति । कश्चिद्ग्रन्थविशेषोऽयम् ।

**छान्दसः** ( ई. ५३ )—छन्दसां व्याख्यानः, तत्र भवो वेत्यर्थे 'छन्दसो यदणौ' इति सूत्रेण यत्प्रत्यये विभक्तिकार्ये 'छन्दस्यः' इति अण्प्रत्ययपक्षे आदिवृद्धौ विभक्तिकार्ये 'छान्दसः' इति ।

**द्व्यजदिति** ( ई. ४३ )—'द्व्यच्, ऋत्, ब्राह्मण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नामन्, आख्यातात्—ठक्' इति सूत्रस्य पदच्छेदो बोध्यः ।

**शौण्डिकः** ( ई. २२ )—शुण्डिकादागतः इत्यर्थे 'ठगायस्थानेभ्यः' इत्यनेन प्राप्तं ठगं प्रबाध्य 'शुण्डिकादिभ्योऽण्' इति सूत्रेण अणि सुब्लुकि 'तद्धितेष्वचामादेः' इत्यनेन णित्वादादिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'शौण्डिकः' इति। शुण्डिकमाय-स्थानविशेषः।

**अशौचम्** ( ई. ५० )—अशुचेरागतमित्यर्थे 'तत आगतः' इत्यणि 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' इति सूत्रेण नञः परस्यादेरचः नित्यं पूर्वपदस्य तु विभाषया वृद्धौ 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'आशौचम्' इति। पूर्वपदस्य वृद्ध्यभावपक्षे 'अशौचम्' इति।

**कार्कणः** ( ई. २७ )—कृकणादागतः इति विग्रहे 'कृकणपर्णाद्भारद्वाजे' इत्यनेन छप्रत्यये प्राप्ते अपवादत्वात्तम्प्रबाध्य 'शुण्डिकादिभ्योऽण्' इत्यनेन अणि अनुबन्धलोपे सुब्लुकि च कृते णित्वादादिवृद्धौ विभक्त्यादिकार्ये 'कार्कणः' इति जातम्।

**हैमवती** (ई. ५३)—हिमवतः प्रभवति हैमवती गङ्गा। अत्र 'प्रभवति' इति सूत्रेण अण्प्रत्यये आदिवृद्धौ स्त्रीत्वात् ङीपि विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**किरातार्जुनीयम्** ( ई. ५१, ५४ )—किरातश्च अर्जुनश्चेति किरातार्जुनौ तावधिकृत्यकृतो ग्रन्थः इति विग्रहे 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'किरातार्जुनीयम्' इति। क्लीबत्वं तु निपातनाद् बोध्यम्।

**स्रौघ्नः** ( ई. ५३ )—स्रुघ्नोऽभिजनोऽस्येति विग्रहे 'अभिजनश्च' इति सूत्रेण प्रथमान्तात् स्रुघ्नशब्दात् अण्प्रत्यये आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'स्रौघ्नः' इति। यत्र स्वयं वसति स निवासः। यत्र पूर्वैरुषितं सोऽभिजनः। इति विवेकः।

**आर्क्षोदाः** ( ई. ५५ )—ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदा द्विजाः। अत्र प्रथमान्तात् ऋक्षोदशब्दात् 'अभिजनश्च' इति सूत्रेण अणि आदिवृद्धौ रपरत्वे अकारलोपे विभक्तिकार्ये प्रथमाबहुवचने 'आर्क्षोदाः' इति सिद्धं भवति। 'आयुधजीवीभ्यश्छः पर्वते' इति सूत्रे 'आयुध' इत्युक्तत्वादत्र छप्रत्ययो नेति तत्त्वविदः।

**ताक्षशिलः** ( ई. ५२ )—तक्षशिला नगरी अभिजनोऽस्येत्यर्थे 'सिन्धुतक्षशिलादिभ्योऽणञौ' इति सूत्रेण प्रथमान्तात् तक्षशिलाशब्दात् अणि आदिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'ताक्षशिलः' इति ।

**पायसिकः** ( ई. ३२ )—पयो भक्तिरस्येति विग्रहे 'अचित्तादेशकालाट्ठक्' इति ठकि 'किति च' इत्यादिवृद्धौ ठस्येकादेशे विभक्तिकार्ये 'पायसिकः' इति ।

**तैत्तिरीयाः** ( ई. ४६ )—तित्तिरिणा प्रोक्तमधीयते इति विग्रहे 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' इति सूत्रेण छण् प्रत्यये सुव्लुकि णित्वादादिवृद्धौ छस्य ईयादेशे भसंज्ञायां 'यस्येति च' इत्यनेन इकारलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां जसि सकारस्य रुत्वे विसर्गे 'तैत्तिरीयाः' इति सिद्धम् ।

**काश्यपिनः** ( ई. ४३ )—काश्यपेन प्रोक्तमधीयते इति विग्रहे 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इति सूत्रेण णिनिप्रत्यये सुव्लुकि णित्वादादिवृद्धौ तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां जसि सकारस्य रुत्वे विसर्गे 'काश्यपिनः' इति ।

**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु'** ( ई. ४३ )—अत्र सूत्रे 'तेन प्रोक्तम्' इति, 'णिनिः' इति चानुवर्तते । मन्त्रव्यतिरिक्तवेदभागा ब्राह्मणानि, बोधायनादिकल्पसूत्राणि—कल्पाः । तथाभूतेषु पुरातनमुनिकल्पेषु ग्रन्थेषु वाच्येषु तृतीयान्तात् णिनिः स्यादित्यर्थः । तदेव प्रतिपादितं कौमुद्यां—'तृतीयान्तात् प्रोक्तार्थे णिनिः स्यात् , यत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति' इति । ब्राह्मणे उदाहरणम्-'भाल्लविनः' इति । तत्र भल्लुना = पुरातनमुनिना प्रोक्तान् ब्राह्मणभागानधीयते इत्यर्थे उक्तसूत्रेण प्रोक्तार्थे णिनिप्रत्यये सुव्लुकि णित्वादादिवृद्धौ गुणे अवादेशे भाल्लविन्—शब्दादध्येत्रणो लुकि 'भाल्लविनः' इति जसि रूपम् । कल्पे उदाहरणं-'पैङ्गी' इति । तत्र पिङ्गेन = पुरातनमुनिना प्रोक्तः इत्यर्थे प्रकृतिसूत्रेण णिनिप्रत्यये सुव्लुकि णित्वादादिवृद्धौ तद्धितान्तत्वात् सौ उपधादीर्घे सुलोपे नलोपे 'पैङ्गी' इति । कल्पा इति शेषः । 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यध्येतृप्रत्ययान्तत्वनियमस्तु कल्पेषु न सर्वत्र प्रवर्तते इति 'छन्दोब्राह्मणानि' इति सूत्रे भाष्ये स्पष्टम् ।

**आश्मरथः** ( ई. ३४ )—आश्मरथ्येन प्रोक्तः इति विग्रहे प्रोक्तार्थे अणि भसंज्ञायाम् 'आपत्यस्य च तद्धितेऽनाति' इत्यनेन यलोपे विभक्तिकार्ये 'आश्मरथः' इति । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि—पुराणग्रहणाऽभावे अनेन णिनिः स्यादिति प्रष्टुराशयः ।

**कालापाः** ( ई. ३०, ३७, ४४ )—कलापिना प्रोक्तमधीयते इति विग्रहे तृतीयान्तात् कलापिच्छब्दात् 'कलापिनोऽण्' इत्यनेन अणि सुब्लुकि णित्वादादिवृद्धौ 'नान्तस्य टिलोपे सब्रह्मचारि' इत्यादिवार्तिकेन टिलोपे तद्धितान्तत्वाज्जसि अनुबन्धलोपे सवर्णदीर्घे रुत्वे विसर्गे 'कालापाः' इति ।

**पाराशरिणः** (ई. ३५, ५१)–पराशरशब्दानन्तरापत्येऽपि गोत्रत्वेनोपचारात् 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ अलोपे स्वादिकार्ये 'पाराशर्यः' इति । ततः—पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते इति विग्रहे 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति सूत्रेण णिनिप्रत्यये सुब्लुकि 'आपत्यस्य च तद्धितेऽनाति' इत्यनेन यलोपे तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां जसि अनुबन्धलोपे णत्वे सकारस्य रुत्वे विसर्गे 'पाराशरिणः' इति ।

**सौदामनी** ( ई. ३१ )—सुदाम्ना अद्रिणा एकदिग् इत्यर्थे 'तेनैकदिक्' इति सूत्रेण अणि सुब्लुकि णित्वादादिवृद्धौ 'अन्' इति प्रकृतिभावाट्टिलोपाभावे 'टिड्ढाणञ्—' इत्यादिना ङीपि विभक्तिकार्ये 'सौदामनी' इति । तडित्सौदामनी विद्युदित्यमरः ।

**क्षौद्रम्** ( ई. ५० )—क्षुद्राभिः कृतं क्षौद्रम् । अत्र 'क्षुद्राभ्रमरवटरपादपादञ्' इति सूत्रेण अञि आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'क्षौद्रम्' इति ।

**वाटरम्** ( ई. ३८ )—वटरेण क्रीतमिति विग्रहे 'क्षुद्राभ्रमरवटरपादपादञ्' इति सूत्रेण अञ्प्रत्यये सुब्लुकि ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे स्वादिकार्ये 'वाटरम्' इति ।

**संवहित्रम्** ( ई. ३८, ४५ )—संवोढुः स्वमिति विग्रहे 'वहेस्तुरणिट् च' इति वार्तिकेन तृजन्तात् संपूर्वाद् वहेरणि इटि च कृते सुब्लुकि णित्वादादिवृद्धौ यणि स्वादिकार्ये 'संवहित्रम्' इति । अत्र ढत्वादीनामसिद्धत्वादलौकिक एव विग्रहवाक्ये पूर्वमिट्, ततो निमित्ताऽभावान्न ढत्वादीति बोध्यम् ।

**सामिधेनी** ( ई. ४२ )—यया ऋचा समिदाधीयते सा सामिधेनी' ऋक् । षष्ठयन्तात् समिच्छब्दात् 'समिधमाधाने षेण्यण्' इति वार्तिकेन षेण्यण्प्रत्यये सुब्लुकि अनुबन्धलोपे षित्वान् ङीषि 'हलस्तद्धितस्य' इति यलोपे णित्वादादिवृद्धौ विभक्त्यादिकार्ये 'सामिधेनी' इति ।

**आधिदैविकम्**—देवेष्वित्यधिदेवम् । अधिदेवे भवमाधिदैविकम् । अधिदेव-शब्दात् 'अध्यात्मादेष्ठञिष्यते' इति वार्तिकेन ठञि ठस्येकादेशे 'अनुशतिकादीनां च' इत्युभयपदवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'आधिदैविकम्' इति ।

**शारीरकीयः**—शरीरस्याऽयं शारीरः ( भवार्थेऽण् ) शारीर एव शारीरकः ( स्वार्थे कः ) । तमधिकृत्यकृतो ग्रन्थः शारीरकीयः । 'अधिकृत्यकृते ग्रन्थे' इति सूत्रेण शारीरकशब्दात् छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये उक्त रूपं सिद्धम् ।

**सैरिकम्** ( ई० ३२, ४८ ) सीरस्येदमिति विग्रहे 'हलसीराट्ठक्' इति सूत्रेण ठकि सुब्लुकि ठस्येकादेशे कित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे तद्धितान्तत्वात्सौ तस्य अमि पूर्वरूपे 'सैरिकम्' इति ।

**गार्गम्** ( ई० ४३ )—गार्ग्यस्येदम् ( लक्षणम् ) इति विग्रहे यञन्तात् गार्ग्यशब्दात् 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' इति सूत्रेण अणि 'यस्येति च' इत्यलोपे 'आपत्यस्य च तद्धितेऽनाति' इत्यनेन यलोपे णित्वादादिवृद्धौ विभक्तिकार्ये 'गार्गम्' इति । लक्षणमिति शेषः ।

**नाट्यम्** ( ई० ५१ )—नटानां धर्म आम्नायो वेत्यर्थे 'छन्दोगौक्थिकयाज्ञिक-बह्वृचनटाञ्ञ्यः' इति सूत्रेण ञ्यप्रत्यये ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'नाट्यम्' इति । ननु 'चरणाद्धर्माम्नाययोः' इति वार्तिकोक्तत्वात् नटस्य अचरणत्वात् तत्र धर्माम्नाययोः कथमन्वयः इति चेन्न, छन्दोगादिसाहचर्यात् नट-शब्दादपि धर्माम्नाययोरेव प्रत्ययः स्यादिति ।

**कौपिञ्जलः** ( ई० ३०,३१,४५ )—कुपिञ्जलस्याऽपत्यमित्यर्थे 'कौपिञ्जलहास्तिपदादण्' इति सूत्रे 'कौपिञ्जले'ति निर्देशात् 'अत इञ्' इत्यिञं बाधित्वा अनेन सूत्रेण निपातनादणि सुब्लुकि णित्वादादिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'कौपिञ्जलः' इति । ततः अणन्तात् तस्येदमित्यर्थे अनेन सूत्रेण पुनरणि, सुब्लुकि, पर्जन्यवल्लक्षणया णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कौपिञ्जलः' इति ।

इति शैषिकप्रकरणम् ।



# अथ प्राग्दीव्यतीयप्रकरणम्

**तस्य विकारः** ( ई० ५३ )—विक्रियते इति विकारः कर्मणि घञ्। विकार इत्यर्थे षष्ठ्यन्तादणादयः साधारणा वक्ष्यमाणाश्च वैशेषिका यथाविहितं स्युरित्यर्थः। 'अश्मनो विकारः आश्मः' इत्युदाहरणम्। अत्र 'तस्य विकारः' इति सूत्रेण अणि 'तद्धितेष्वचामादेः' इति णित्वादादिवृद्धौ 'अश्मनो विकारे टिलोपो वक्तव्यः' इति वार्तिकेन टिलोपे स्वादिकार्ये 'आश्मः' इति सिद्धम्।

**मार्त्तिकः** ( ई० ४१ )—मृत्तिकाया विकारः इत्यर्थे षष्ठ्यन्तात् मृत्तिका-शब्दात् 'तस्य विकारः' इत्यणि णित्वादादिवृद्धौ रपरत्वे 'यस्येति च' इत्याकार-लोपे स्वादिकार्ये 'मार्त्तिकः' इति।

**बैल्वम्** (ई० ४३)—बिल्वस्यावयवो विकारो वेत्यर्थे 'बिल्वादिभ्योऽण्' इत्यणि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे स्वादिकार्ये 'बैल्वम्' इति।

**जातुषम्** ( ई० ५४ )—जतुनो विकार इति विग्रहे 'त्रपुजतुनोः षुक्' इति षुकि 'किति च' इति कित्वादादिवृद्धौ विभक्तिकार्ये 'जातुषम्' इति।

**कापित्थम्** ( ई० ४० )—कपित्थस्यावयवो विकारो वेत्यर्थे 'अनुदात्तादेश्च' इत्यनेन अञि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्त्यादि-कार्ये 'कापित्थम्' इति।

**आश्मनम्** ( ई० ५३ )—कल्माषांघ्रिर्नामकश्चिद्राजा तत्पत्न्यां वसिष्ठेन उत्पा-दितः अश्मकः इति। अश्मन् शब्दात् स्वार्थे कप्रत्ययः। तदभावे अश्मेत्यपि नाम। तस्य विकारोऽवयवो वेत्यर्थे 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति सूत्रेण विभाषया मयटि तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि अन्तर्वर्तिनीं विभक्ति-माश्रित्य पदत्वान्नलोपे विभक्तिकार्ये 'अश्ममयम्' इति। मयडभावे 'तस्य विकारः' इत्यणि णित्वादादिवृद्धौ विभक्तिकार्ये 'आश्मनम्' इति। 'अन्' इति प्रकृतिभावान्न टिलोपः। न च विकारार्थकत्वे 'अश्मनो विकारे टिलोपो वक्तव्यः' इति वार्तिकेन टि-लोपः कुतो नेति वाच्यम्, तत्र पाषाणवाचकस्य प्रसिद्धस्य अश्मन् शब्दस्यैव ग्रहणात्।

**आप्यम्** ( ई० ३८ )—अपामिदमिति विग्रहे 'तस्येदम्' इत्यणि णित्वा-दादिवृद्धौ विभक्तिकार्ये 'आपम्' इति। ततः 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण स्वार्थे ष्यञि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आप्यम्' इति।

**ऐन्द्रायुधम्** ( ई० ५५ )—इन्द्रायुधस्य विकारोऽवयवो वेत्यर्थे 'तालादिभ्योऽण्' इति सूत्रेण 'अनुदात्तादेश्च' इति प्राप्तमञमपवाद्य अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**सौवर्णः** ( ई० ३६ )—सुवर्णस्य विकारः इत्यर्थे 'अनुदात्तादेश्च' इति प्राप्तमञमपवाद्य 'जातरूपेभ्यः परिमाणे' इति सूत्रेण अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यल्लोपे विभक्तिकार्ये 'सौवर्णः' इति सिद्धम् ।

**शौकम्** ( ई० ४१ )—शुकस्यावयवो विकारोवेत्यर्थे 'प्राणि रजतादिभ्योऽञ्' इत्यञि ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शौकम्' इति ।

**बाकम्** ( ई० ३७ )—बकस्यावयवो विकारो वेत्यर्थे 'प्राणिरजतादिभ्योऽञ्' इति अञि ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'बाकम्' इति ।

**राजतम्** ( ई० ४० )—रजतस्य विकारोऽवयवो वेत्यर्थे मयटमपवाद्य 'प्राणिरजातादिभ्योऽञ्' इति सूत्रेण अञि ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'राजतम्' इति ।

**क्रीतवत्परिमाणात्** ( ई० ३६ )—'प्राग्वहतेष्ठञ्' इत्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना ( प्रकृत्यादिविशेषणेन ) परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते इति सूत्रार्थः । अणादीनामपवादोऽयम् । अत्र परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, व्याख्यानात् । तेन संख्याया अपि ग्रहणम् । निष्केण क्रीतं नैष्किकम्' इत्युदाहरणम् । 'असमासे निष्कादिभ्यः' इत्यत्र ठक् ।

**शत्यः** ( ई० ४२ )—शतस्य विकारः इत्यर्थे 'क्रीतवत्परिमाणात्' इति सूत्रारम्भसामर्थ्यात् 'शताच्च ठन्यतावशते' इति सूत्रेण विकारार्थेऽपि यत्प्रत्यये 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'शत्यः' इति । ठनि तु 'शतिकः' इति भवति ।

**एण्या ढञ्** ( ई० ४२ )—इदं सूत्रं चतुर्थाध्याये तृतीयपादे वर्तते । एण्या अवयवो विकारो वा 'ऐणेयम्' इत्युदाहरणम् ।

**ऐणेयम्** ( ई० ३९ )—एण्या अवयवो विकारो वेत्यर्थे 'एण्या ढञ्' इति सूत्रेण ढञि ञित्वादादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इति ईकारलोपे विभक्तिकार्ये 'ऐणेयम्' इति सिद्धम् ।

**आमलकम्** ( ई० ५३ )—आमलक्याः फलमित्यर्थः। आमलक्या विकारोऽवयवो वेत्यर्थे। 'नित्यं वृद्धशरादिभ्यः' इत्यनेन मयटि 'फले लुक्' इति तस्य लुकि 'लुक्तद्धितलुकि' इति ङीषो लुकि सोरमादेशे 'आमलकम्' इति।

**नैयग्रोधम्** ( ई० ४२, ४७ )—न्यग्रोधस्य विकारोऽवयवो वेत्यर्थे 'तस्य विकारः' इत्यणि णित्वादादिवृद्धौ प्राप्तायां 'न्यग्रोधस्य च केवलस्य' इति सूत्रेण तन्निषेधे ऐजागमे च कृते 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**जाम्बवम्** ( ई० ५४, ५६ )—जम्ब्वाः फलमित्यर्थः। जम्ब्वाः विकारोऽवयवो वेत्यर्थे 'जम्ब्वा वा' इति विभाषया अणि आदिवृद्धौ गुणेऽवादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'जाम्बवम्' इति।

**जम्बु** (ई० ५६)—जम्ब्वा वा इति विकल्पपक्षे 'ओरञ्' इति सूत्रेण विकाराद्यर्थे अञि 'फले लुक्' इति लुकि नपुंसकह्रस्वे सोर्लुकि 'जम्बु' इति। जम्ब्वा फलमित्यर्थः।

**जम्बूः** ( ई० ५४ )—जम्ब्वाः फलमित्यर्थः। अत्र 'जम्ब्वा वा' इति विकल्पपक्षे 'ओरञ्' इति अञि तस्य 'लुप् च' इति सूत्रेण लुपि 'लुपि युक्तवद्व्यक्तिवचने' इत्यनेन युक्तवत्वेन विशेष्यलिङ्गवचने बाधित्वा स्त्रीत्वे एकवचने च जाते विभक्तिकार्ये उक्तं रूपं जातम्। तथा च जम्ब्वाः फलान्यपि जम्बूरेवेत्यवसेयम्।

**व्रीहयः** ( ई० ४३, ५६ )—व्रीहीनां विकारोऽवयवो वेत्यर्थे 'तस्य विकारः' इत्यणि 'फलपाकशुषामुपसंख्यानम्' इति वार्तिकेन तस्य लुपि 'लुपि युक्तवद्व्यक्तिवचने' इत्यनेन युक्तवद्भावात्पुंस्त्वे विभक्तिकार्ये 'व्रीहयः' इति प्रथमाबहुवचने रूपम्। व्रीह्याख्यानामोषधीनां फलानीत्यर्थः।

**मुद्गाः** ( ई० ४३' ५५ )—मुद्गानां विकारोऽवयवो वेत्यर्थे 'बिल्वादिभ्योऽण्' इत्यणि 'फलपाकशुषामुपसंख्यानम्' इति वार्तिकेन तस्य लुपि 'लुपि युक्तवत्—' इति युक्तवद्भावात्पुंस्त्वे विभक्तिकार्ये 'मुद्गाः' इति प्रथमाबहुवचने रूपं सिद्धम्।

**कांस्यम्**—( ई० ३७,४६ )—कंसाय हितमिति विग्रहे 'तस्मै हितम्' इति छप्रत्यये छस्येयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कंसीयः' इति। ततः कंसीयस्य विकारः इत्याद्यर्थे 'कंसीयपरशव्ययोर्यञञौ लुक् च' इत्यनेन यञ्प्रत्यये छस्य लुकि च कृते 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कांस्यम्' इति।

प्राग्दीव्यतीयप्रकरणम्।

# अथ प्राग्वहतीयप्रकरणम्

**व्याडिः** ( ई० ५६ )—न विद्यते डो यस्य सः अडः, विगतोऽडः, व्यडः। व्यडस्यापत्यमिति विग्रहे 'अत इञ्' इति इञ्प्रत्यये 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्। 'न य्वाभ्यां पूर्वौ तु ताभ्यमैच्' इत्यैजागमस्तु न, 'स्वागतादीनां च' इत्यनेन निषेधात्।

**प्राभूतिकः** ( ई० ४१ )—प्राभूतमाहेत्यर्थे 'आहौ प्रभूतादिभ्यः' इति वार्तिकेन ठकि 'किति च' इत्यादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'प्राभूतिकः' इति।

**सौखशायनिकः** ( ई० ४५ )—सुखशयनं पृच्छतीत्यर्थे 'पृच्छतौ सुस्नातादिभ्यः' इति वार्तिकेन ठकि कित्वात्प्राप्तामादिवृद्धिमपवाद्य 'अनुशतिकादीनां च' इत्यनेन उभयपदवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**आक्षिकम्** ( ई० ४० )—अक्षैर्जितमिति विग्रहे 'तेन दीव्यति खनति जयति जितम्' इति सूत्रेण ठकि 'किति चे'ति आदिवृद्धौ ठस्येकादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'आक्षिकम्' इति।

**मारीचिकम्**—मरीचेन संस्कृतमिति विग्रहे 'संस्कृतम्' इति ठकि ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ 'यस्येति च' इत्यलोपे 'मारीचिकम्' इति।

**श्वगणिकः** ( ई० ४२ )—श्वगणेन चरतीत्यर्थे 'श्वगणाट्ठञ् च' इत्यनेन ठनि ठस्य इकादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'श्वगणिकः' इति। 'द्वारादीनां च' इति सूत्रेण ऐजागमस्तु न 'श्वादेरिञि' इति सूत्रस्थ 'इकारादाविति वाच्यम्' इति वार्तिकेन निषेधात्।

**श्वापदम्** ( ई० ४७ )—श्वापदस्य इदमिति विग्रहे 'तस्येदम्' इत्यणि 'पदान्तस्यान्यतरस्याम्' इति सूत्रेण पदशब्दान्तस्य श्वादेरङ्गस्य ऐजागमे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शौवापदम्' इति। ऐजाभावे पर्यन्यवल्लक्षणया आदिवृद्धौ अलोपे विभक्तिकार्ये 'श्वापदम्' इति।

**धानुष्कः**—( ई० ४३ )—धनुषा जीवतीत्यर्थे 'वेतनादिभ्यो जीवति' इति सूत्रेण ठञि 'इसुसुक्तान्तात् कः' इति ठस्य कादेशे आदिवृद्धौ 'इणः षः' इति षत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**वीवधिकः** ( ई० ५३ )—वीवधेन हरतीत्यर्थे 'विभाषा विवधात्' इति सूत्रेण एकदेशविकृतन्यायेन तृतीयान्तात् वीवधशब्दादपि ष्ठनि अनुबन्धलोपे ठस्य इकादेशे 'यस्येति च' इति अलोपे विभक्तिकार्ये 'वीवधिकः' इति ।

**वीवधिकी** ( ई० ५५ )—वीवधेन हरतीत्यर्थे 'विभाषा विवधात्' इति । विकल्पपक्षे 'प्राग्वहतेष्ठक्' इति ठकि ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वविवक्षायां 'टिड्ढाणञ्—' इति ङीपि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**कौटलिकः** ( ई० ४४ )—कौटल्या हरति मृगान् अङ्गारान् वेत्यर्थे 'अण् कुटलिकायाः' इति सूत्रेण अणि णित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'कौटलिकः' इति ।

**कृत्रिमम्** ( ई० ५६ )—कृत्या निर्वृत्तमित्यर्थे 'क्त्रेर्मम् नित्यम्' इति सूत्रेण क्त्रिप्रत्ययान्तप्रकृतिकात् तृतीयान्तात् निर्वृत्तेर्थे मपि अनुबन्धलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । अत्र विग्रहवाक्ये 'स्त्रियां क्तिन्' इति क्तिन्नन्तोऽयं कृतिशब्दः । डुकृञ् करणे इति धातोः 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययान्तात् मप् ।

**औजसिकः** ( ई० ४७ )—ओजसा ( बलेन ) वर्तते इत्यर्थे 'ओजः सहोऽम्भसा वर्तते' इति सूत्रेण ठकि 'किति च' इत्यादिवृद्धौ ठस्य इकादेशे विभक्तिकार्ये 'औजसिकः' इति ।

**आनुलोमिकः** ( ई० ५४ )—अनुलोमं वर्तते इत्यर्थे 'तत्प्रत्ययानुपूर्वमीपलोपकूलम्' इति सूत्रेण ठकि 'किति चे'त्यादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**प्रातिकूलिकः** ( ई० ४१ )—प्रतिकूलं वर्तते इत्यर्थे 'तत्प्रत्ययानुपूर्वम्–' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं जातम् ।

**आनुकूलिकः** ( ई० ३६ )—अनुकूलं वर्तते इत्यर्थे 'तत्प्रकृत्यानुपूर्वम्' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आनुकूलिकः' इति ।

**वार्धुषिकः** ( ई० ४१, ५६ )—वृद्ध्यर्थं प्रयच्छतीत्यर्थे 'प्रयच्छति गर्ह्यम्' इति सूत्रेण ठकि 'वृद्धेर्वृधुषिभावो वक्तव्यः' इति वार्तिकेन वृधुष्यादेशे कित्वादादि-

वृद्धौ रपरत्वे ठस्य इकादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'वार्धुषिकः' इति निष्पन्नम् ।

**सामाजिकः** ( ई० ४० )—समाजं रक्षतीत्यर्थे 'रक्षति' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति चे'त्यकारलोपे विभक्तिकार्ये 'सामाजिकः' इति सिद्धम् ।

**शाब्दिकः**—शब्दं करोतीति विग्रहे 'शब्ददर्दुरं करोति' इति ठकि ठस्येकादेशे 'किति चे'ति वृद्धौ विभक्तिकार्ये 'शाब्दिकः' इति । प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः ।

**मैनिकः** ( ई० ५२ )—मीनं हन्तीत्यर्थे 'पक्षिमत्स्यमृगान् हन्ति' इति सूत्रे 'स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्' इति वार्तिकोक्तत्वात् द्वितीयान्तात् मीनशब्दादपि ठकि कित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'मैनिकः' इति ।

**मार्गिकः** ( ई० ३८ )—मृगान् हन्तीत्यर्थे 'पक्षिमत्स्यमृगान् हन्ति' इति सूत्रेण ठकि कित्वादादिवृद्धौ रपरत्वे ठस्य इकादेशे 'यस्येति चे'त्यकारलोपे विभक्तिकार्ये 'मार्गिकः' इति सिद्धम् ।

**यात्रम्** ( ई० ३८ )—यातुर्धर्म्यमित्यर्थे 'ऋतोऽञ्' इति सूत्रेण धर्म्यमित्यर्थे षष्ठ्यन्तात् ऋदन्तात् यातृशब्दाद् अञि ञित्वादादिवृद्धौ ऋकारस्य यणि विभक्तिकार्ये 'यात्रम्' इति ।

**वैशस्त्रम्** ( ई० ३७, ४६, ५५ )—विशसितुर्धर्म्यमित्यर्थे 'विशसितुरिड्लोपश्चाण् च वाच्यः' इति वार्तिकेन विशसितृशब्दात् अञि इटो लोपे ऋकारस्य यणि ञित्वादादिवृद्धौ विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**वैभाजित्रम्** ( ई० ४४, ५६ )—विभाजयितुर्धर्म्यमित्यर्थे 'विभाजयितुर्णिलोपश्चाञ्च वाच्यः' इति वार्तिकेन अञि, णिलोपे ऋकारस्य यणि आदिवृद्धौ विभक्तिकार्ये 'वैभाजित्रम्' इति ।

**लावणिकः**—लवणम् ( पण्यम् ) अस्येति विग्रहे 'लवणाट्ठञ्' इति ठञि ठस्येकादेशे 'किति चे'ति वृद्धौ भत्वादलोपे विभक्तिकार्ये 'लावणिकः' इति ।

**शलालुकः** (ई० ४०)—शलालु पण्यमस्येति विग्रहे 'शलालुतोऽन्यतरस्याम्' इति सूत्रेण ष्ठनि अनुबन्धलोपे 'इसुसुक्तान्तात्कः' इति ठस्य कादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम् । शलालुः सुगन्धिद्रव्यविशेषः ।

**धानुष्कः** ( ई० ४३ )—धनुः प्रहरणमस्येत्यर्थे 'प्रहरणम्' इति सूत्रेण ठकि कित्वादादिवृद्धौ 'इसुसुक्तान्तात्कः' इति ठस्य कादेशे 'इणः षः' इति षत्वे विभक्तिकार्ये 'धानुष्कः' इति।

**शाक्तीकः**—शक्तिरस्ति अस्येति विग्रहे 'शक्तियष्ट्योरीकक्' इति प्रथमान्तात् शक्तिशब्दात् ईकक्प्रत्यये 'किति चे'ति वृद्धौ सवर्णदीर्घे विभक्तिकार्ये 'शाक्तीकः' इति।

**आस्तिकः** ( ई० ३६ )—अस्ति परलोकः इत्येवं मतिर्यस्येति विग्रहे अस्तीति निपातनात् प्रथमान्तात् 'अस्ति नास्ति दिष्टं मतिः' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'आस्तिकः' इति सिद्धम्।

**दैष्टिकः** ( ई० ४३, ५४ )—दिष्टमिति मतिर्यस्येति विग्रहे 'अस्ति नास्ति दिष्टं मतिः' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्येकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'दैष्टिकः' इति सिद्धम्।

**छात्त्रः**—गुरोरावरणं छत्त्रम्, तच्छीलमस्येति विग्रहे 'छत्त्रादिभ्यो णः' इति प्रथमान्तात् छत्त्रशब्दात् णप्रत्यये णित्वादादिवृद्धौ विभक्तिकार्ये 'छात्त्रः' इति सिद्धम्।

**नस्तद्धिते** ( ई० ३७ )—अयमाशयः 'कार्मस्ताच्छील्ये' इति सूत्रे 'कार्म' इति, तत्र कर्मन् शब्दात्ताच्छील्ये णे परे टिलोपो भवतीत्यर्थः। ननु छत्त्रादिगणे पाठात् णे तद्धिते परेऽपि 'नस्तद्धिते' इत्यनेनैव टिलोपस्य सिद्धत्वात् 'कार्मस्ताच्छील्ये' इत्यनेन टिलोपनिपातनं व्यर्थमिति चेन्न, 'अन्' इति प्रकृतिभावेन 'नस्तद्धिते' इत्यस्याप्राप्तेः। न चाणि परे एव तेन प्रकृतिभावविधानात् प्रकृते तु णप्रत्ययेन प्रकृतिभावाप्राप्त्या पुनस्तेनैव लोपसिद्धेऽत्र टिलोपविधानं व्यर्थमेवेति वाच्यम्, एवं सति 'अणका ताच्छीलके णेऽपि' इति ज्ञापनेन चारितार्थ्यसम्भवात्। तथा चात्र टिलोपविधिर्हि 'अन्' इति प्रकृतिभावनिवृत्त्यर्थो ज्ञेयः। उक्तज्ञापनादेव चुरा शीलमस्या इति विग्रहे 'शीलं छत्त्रादिभ्यो णः' इति णप्रत्ययेऽपि तदन्तादणन्तकार्ये ङीपि चौरी-प्रभृतिप्रयोगसिद्धिर्भवतीत्यवसेयम्।

**ऐकान्यिकः** ( ई० ४५ )—एकमन्यद्वृत्तमस्येति विग्रहे 'तद्धितार्थ—' इति समासे एकान्यशब्दात् 'कर्माध्ययने वृत्तम्' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'ऐकान्यिकः' इति।

**सांस्थानिकः** ( ई० ५५ )—संस्थाने व्यवहरतीत्यर्थे संस्थानेषु व्यवह-रति' इति सूत्रेण ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'सांस्थानिकः' इति ।

**आकर्षादिति** ( ई० ३८ )—'आवसथात् छल्' इति सूत्रे श्लोकवार्त्तिक-मिदम्—

'आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।

आवसथात्किसरादेः षितः षडेते ठगधिकारे' इति ।

अत्र आकर्षादित्यनेन 'आकर्षात्ष्ठल्' इति सूत्रं विवक्षितम् पर्पादेः-इत्यनेन 'पर्पादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । भस्त्रादिभ्यः इत्यनेन 'भस्त्रादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । आवसथादित्यनेन 'आवसथात्ष्ठल्' इति सूत्रं विवक्षितम् । किसरादेरित्यनेन 'किसरादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । 'प्राग्वहतेष्ठक्' इत्य-धिकारे एतैः सूत्रैर्विहिताः षट्प्रत्ययाः षिताः—षकारेत्संज्ञका इत्यर्थः ।

इति ठगधिकारप्रकरणम्



## अथ प्राग्घितीयप्रकरणम्

**धुर्यः, धौरेयः** ( ई० ४० )—धुरं वहतीत्यर्थे द्वितीयान्तात् धुर्शब्दात् 'धुरो यड्ढकौ' इति ढकि कित्वादादिवृद्धौ ढस्य एयादेशे विभक्तिकार्ये 'धौरेयः' इति । यड्प्रत्यये कृते तु 'हलि चे'ति दीर्घे प्राप्ते 'न कुर्छुराम्' इति निषेधे विभक्तिकार्ये 'धुर्यः' इति ।

**पद्याः** ( ई० ४२ )—पादौ विध्यन्ति पद्याः = शर्कराः । द्वितीयान्तात् पाद-शब्दात् 'विध्यत्यधनुषा' इति सूत्रेण यत्प्रत्यये 'पद्यत्यदर्थे' इति पद्भावे विभक्ति-कार्ये 'पद्याः' इति ।

**धेनुष्या** ( ई० ५३ )—या धेनुर्दोहनार्थमुत्तमर्णाय अधमर्णेन दीयते तस्या इयं संज्ञा । अत्र 'संज्ञायां धेनुष्या' इति सूत्रेण यत्प्रत्यये षुकागमे च कृते स्त्रीत्वविव-क्षायां टापि विभक्तिकार्ये 'धेनुष्या' इति । धेनुष्या वन्धके स्थिता ।

**नौवयोधर्म** ( ई० ३७ )—नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्य-वध्यानाम्यसमसमितसंमितेषु' इति सूत्रस्वरूपम् । नौ, वयस् , धर्म, विष, मूल, मूल, तुला, सीता, एभ्योऽष्टभ्यः क्रमात्तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, संमिते चार्थे यत्स्यादित्यर्थः । यथाक्रममुदाहरणानि यथा—नावा तार्यम् = नाव्यम्—

तृतीयान्तान्नौशब्दाद्यत्प्रत्यये 'वान्तो यि–' इति अवादेशे स्वादिकार्ये रूपम् । वयसा तुल्यः=वयस्यः अत्रापि तृतीयान्ताद्वयस्शब्दात् यत् । एवं धर्मेण प्राप्यमिति विग्रहे धर्म्यम् , विषेण वध्यो-विष्यः । मूलेन आनाम्यम् मूल्यम् । मूलेन समः=मूल्यः । सीतया समितं = सीत्यं क्षेत्रम् । तुलया संमितं = तुल्यम् । सर्वत्र तृतीयान्ताद्यति सुब्लोपे स्वादिकार्ये सति रूपाणि सिद्ध्यन्ति ।

**मूल्यम्**—( ई० ४० )—मूलेनाम्यं मूल्यम् । अत्र 'नौवयोधर्म' इति सूत्रेण तृतीयान्तात् मूलशब्दात् यत्प्रत्यते 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'मूल्यम्' इति ।

**सीत्यम्** ( ई० ३६ )—सीतया समितमिति विग्रहे 'नौवयोर्धर्म—' इति सूत्रेण यत्प्रत्यये 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'सीत्यम्' इति ।

**पथ्यम्** ( ई० ४७ )—'पथः अनपेतमित्यर्थे 'धर्मपथ्यर्थन्यायादनपेतम्' इति सूत्रेण यत्प्रत्यये भत्वाट्टिलोपे विभक्तिकार्ये 'पथ्यम्' इति ।

**हृद्यः** ( ई० ५५ )—हृदयस्य प्रियः इत्यर्थे 'हृदयस्य प्रियः' इति सूत्रेण यत्प्रत्यये 'हृदयस्य हृल्लेख' इति सूत्रेण हृदयस्य हृदादेशे विभक्तिकार्ये 'हृद्यः' इति ।

**सामन्यः** ( ई० ५३ )—सामसु साधुः सामन्यः । अत्र 'तत्र साधुः' इति सूत्रेण सप्तम्यन्तात् सामन्शब्दात् यत्प्रत्यये विभक्तिकार्ये 'सामन्यः' इति । साधुरत्र प्रवीणो गृह्यते, न तु हितः तत्र 'तस्मै हितम्' इति वक्ष्यमाणत्वात् ।

**शरण्यः** ( ई० ४६ )—शरणे साधुः इति विग्रहे 'तत्र साधुः' इति सूत्रेण यत्प्रत्यये 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'शरण्यः' इति ।

**साक्तुकाः** ( ई० ४४ )—सक्तुषु साधुः इत्यर्थे 'गुडादिभ्यष्ठञ्' इति सूत्रेण ठञ्प्रत्यये ञित्वादादिवृद्धौ 'ठस्येकः' इति ठस्य कादेशे विभक्तिकार्ये 'साक्तुकाः' 'यवाः' इति शेषः ।

**पाथेयम्** ( ई० ४७ )—पथि साधुरिति विग्रहे 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति सूत्रेण ढञ्प्रत्यये टिलोपे ञित्वादादिवृद्धौ ढस्य एयादेशे विभक्तिकार्ये पाथेयम्' इति ।

**सभ्यः** ( ई० ४३ )—सभायां साधुः इत्यर्थे 'सभाया यः' इति सूत्रेण यप्रत्यये 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये' सभ्यः' इति ।

इति प्राग्घितीयप्रकरणम् ।

# अथ छयद्विधिप्रकरणम् ।

**नभ्यम्**—नाभये हितमिति विग्रहे नाभिशब्दात् 'उवगादिभ्यो यत्' इति यत्प्रत्यये 'नाभि नभं च' इति नाभेर्नभादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'नभ्यम्' इति, 'अञ्जनम्' इति शेषः ।

**शून्यम्** ( ई० ४१,५४ )—शूने हितमित्यर्थे 'उवगादिभ्यो यत्' इति यत्प्रत्यये 'शुनः सम्प्रसारणं वा च दीर्घत्वम्' इति गणसूत्रेण सम्प्रसारणे पूर्वरूपे विभाषया दीर्घे च कृते विभक्तिकार्ये 'शून्यम्' इति । दीर्घाभावे 'शुन्यम्' इत्यपि भवति ।

**विभाषा हविरपूपादिभ्यः** ( ई० ३६ )—हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यद्वा स्यादिति तदर्थः । पक्षे छः । न च गवादिष्वपि हविश्शब्दपाठात्तत्रैव हविर्विशेषग्रहणं कथन्न स्यादिति वाच्यम्, असञ्जातविरोधित्वेन तत्र स्वरूपग्रहस्योचितत्वात् । उदाहरणं यथा—'आमिक्ष्यम्' दधि इति । अत्र आमिक्षायै हितमिति विग्रहे यदादिकृते रूपं सिद्ध्यति । पक्षे छप्रत्यये तु-आमिक्षीयम् । एवं पुरोडाश्यास्तण्डुला इत्याद्युदाहरणानि ज्ञेयानि ।

**अपूप्यम्** ( ई० ४० )—अपूपेन क्रीतमिति विग्रहे 'विभाषा हविरपूपादिभ्यः' इति यत्प्रत्यये 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'अपूप्यम्' इति । पक्षे 'प्राक् क्रीताच्छः' इति छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'अपूपीयम्' इति ।

**शङ्कव्यम्** ( ई० ३६ )—शङ्कवे हितमित्यर्थे 'तस्मै हितम्' इति सूत्रेण यत्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । शङ्कव्यं = दारु' इति ।

**शीर्षण्यः** ( ई० ४२ )—शिरसे हितः इत्यर्थे 'शरीरावयवाद्यत्' इति यत्प्रत्यये 'ये च तद्धिते' इति शिरःशब्दस्य शीर्षन्नादेशे 'ये चाभावकर्मणोः' इति प्रकृतिभावाट्टिलोपाभावे णत्वे विभक्तिकार्ये 'शीर्षण्यः' इति ।

**ब्रह्मण्यम्** ( ई० ५४ )—ब्रह्मणे हितमित्यर्थे 'खलयवमाषतिलवृषब्रह्मणश्च' इति सूत्रेण यत्प्रत्यये 'ये चाभावकर्मणोः' इति प्रकृतिभावाट्टिलोपाभावे विभक्तिकार्ये 'ब्रह्मण्यम्' इति । ब्रह्मन्शब्दोऽत्र ब्राह्मणवाच्येव गृह्यते, नतु वेदादिवाची । तेन 'ब्रह्मणे वेदाय हितमिति वाक्यमेवेति भाष्ये स्पष्टम् ।

**अजथ्या यूथिः** ( ई० ३९ )—अजभ्यो हितेत्यर्थे 'अजाविभ्यांथ्यन्' इति थ्यन्प्रत्यये अनुबन्धलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'अजथ्या' इति। लिङ्गविशिष्ट-परिभाषया अजाशब्दादपि थ्यन्। 'तसिलादिषु–' इति पुंवत्त्वम्।

**आत्मनीनम्** ( ई० ४६ )—आत्मने हितमित्यर्थे 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति खप्रत्यये 'आत्माध्वानौ खे' इति प्रकृतिभावाट्टिलोपाभावे खस्य ईनादेशे विभक्तिकार्ये 'आत्मनीनम्' इति।

**सर्वजनीनः** ( ई० ४०,५६ )—सर्वजनाय हितमित्यर्थे 'सर्वजनाट्ठञ् खश्च' इति खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'सर्वजनीनः' इति सिद्धम्।

**पौरुषेयः** ( ई० ४०. ५५ )—पुरुषस्य वधः पुरुषस्य विकारो वेति विग्रहे 'तस्येदम्' इत्यनेन प्राणिरजतादिभ्योऽण्' इत्यनेन वा यथाक्रमेण अणि प्राप्ते तं प्रबाध्य 'पुरुषाद्वधविकारसमूहतेन कृतेषु' इति वार्तिकेन ठञ् प्रत्यये ञित्वादादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये' उक्तं रूपं सिद्धम्।

**एकाकिनोऽपि परितः पौरुषेय वृता इवेति** ( ई० ३७ )—अत्र पौरुषेयपदस्य साधयितुमिष्टं वर्तते, तत्र पुरुषस्य वधः, पुरुषस्य विकारः, पुरुषाणां समूह इति विग्रहे यथाक्रमं 'तस्येदम्' इत्यनेनाणि प्राप्ते, तथा 'प्राणिरजतादिभ्योऽञ्' इत्यनेनाञि प्राप्ते, तथा 'तस्य समूहः' इत्यनेन चाणि प्राप्ते 'सर्वपुरुषाभ्यां णढञौ' इति सूत्रस्य वार्त्तिकेन 'पुरुषाद्वधविकारसमूहतेनकृतेषु' इत्यनेन ढञ् प्रत्ययेऽनुबन्ध-लोपे ढस्य 'आयनेयीनियियः' इत्यादिना एयादेशे 'यस्येति'चेति अकारलोपे ञित्वादादिवृद्धौ तद्धितान्तत्वात् प्रातिपदिकत्वेन सौ तस्य रुत्वे विसर्गे च कृते 'पौरुषेयः इति सिद्धम्। एवं पुरुषेण कृतो ग्रन्थ इति विग्रहे 'कृते ग्रन्थे' इत्यणि प्राप्तेऽपि उक्तदिशा ढञि सति रूपमवगन्तव्यम्। 'पुरुषेण कृतः प्रासादः' इति विग्रहे तु कस्मिन्नपि प्रत्ययेऽप्राप्ते अनेन ढञ् इत्यपि बोध्यम्।

**आर्षभ्यः** ( ई० ४३ )—ऋषभाय अयमित्यर्थे 'ऋषभोपानहोर्ञ्यः' इति ञ्यप्रत्यये ञित्वादादिवृद्धौ रपरत्वे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आर्षभ्यः' इति। यो वत्सः ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते।

**वारत्रम्** ( ई० ५४, ५५ )—वरत्राय इदमित्यर्थे 'चर्मणोऽञ्' इति अञ् प्रत्यये ञित्वादादिवृद्धौ 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'वारत्रम्' इति।

**प्राकारीयाः** ( ई० ३९ )—प्राकारः आसामिष्टकानां स्यादित्यर्थे 'तदस्य तदस्मिन् स्यादिति' इत्यनेन प्राकारशब्दात् प्रथमान्तात् छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'प्राकारीयाः' इति । प्राकारपर्याप्ता इष्टका इति यावत् ।

**प्रासादीयम्** ( ई० ५० )—प्रासादोऽस्य स्यादित्यर्थे 'तदस्य तदस्मिन् स्यादिति' इत्यनेन छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'प्रासादीयं दारु' इति । प्रासादपर्याप्तमिति यावत् ।

**प्राकारीयः** (ई० ४२)—प्राकारोऽस्मिन् स्यादिति प्राकारीयो देशः । साधन प्रकारस्तु पूर्ववत् ।

**पारिखेयी** ( ई० ५४ )—परिखा अस्यामस्तीति विग्रहे 'परिखाया ढञ्' इति ढञ्प्रत्यये ञित्वादादिवृद्धौ ढस्य एयादेशे 'यस्येति च' इत्याकारलोपे स्त्रीत्वात् ङीऽपि विभक्तिकार्ये 'पारिखेयी भूमिः' इति ।

**असमासे निष्कादिभ्यः** ( ई० ३६,३८,४१,५३ )—अयम्भावः 'आर्हा-दगोपुच्छे'त्यतः 'आर्हात्' इति 'तेन क्रीतम्' इति यावत् सप्तदशसूत्र्यामनुवर्त्तते । एवञ्च 'असमासे निष्कादिभ्यः' इत्यत्रापि तत आर्हादिति तथा तस्मादेव ठगप्यनु-वर्त्तते तथा च निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेष्वित्यर्थः सम्पद्यते । उदाहरणं यथा—निष्केण क्रीतमिति विग्रहे तृतीयान्तान्निष्कशब्दादनेन ठकि कित्वा-दादिवृद्धौ विभक्तिकार्ये 'नैष्किकम्' इति । परमनिष्केण क्रीतमिति विग्रहे तु नाऽनेन ठक्, असमासग्रहणपर्युदासात् । किन्तु औत्सर्गिकठञ्प्रत्यये 'परिमाणान्तस्याऽ-संज्ञाशाणयोः' इत्यनेनोत्तरपदवृद्धौ 'परमनैष्किकः' इति भवति । ठक्ठञोस्तु स्वर एव विशेषोऽवगन्तव्यः । ननु निष्कादिभ्य एव ठग्विधीयते तदन्तात्समासाट्ठकोऽ-प्राप्तौ सूत्रेऽसमासग्रहणं किमर्थम् ? न चापञ्चमाध्यायसमाप्तेः प्रातिपदिकग्रहणस्या-धिकृतत्वात्तद्विशेषणतया तदन्तविधौ समासादपि ठकः प्राप्तिरस्त्येवेति वाच्यम्, निष्कादीनां विशिष्यगृहीतत्वेन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति परिभाषया तदन्तविधिनिषेधादिति चेत् ? सत्यम्, एवं सति असमासग्रहणं व्यर्थी-भूय ज्ञापयति-इतः प्राक्तदन्तविधिरिति । तथा च समासे ठञ्निवृत्त्यर्थमसमासग्रहण-स्यावश्यकत्वात् । अत एव सु = शोभना गौः—सुगौः इत्यत्र 'गोरतद्धितलुकि' इति टज् न भवति 'न पूजनात्' इति निषेधात् । सुगवा क्रीतमिति विग्रहे गोशब्दान्तात्

'उगवादिभ्यो यत्' इत्यनेन यत्प्रत्यये सन्धिकार्ये सुगव्यम् इति सिद्ध्यति। एवं 'यवापूप्यम्' इत्यत्र 'विभाषा हविरपूपादिभ्यः' इत्यपूपान्तत्वाद्यत्। नन्वसमासग्रहणेन यथेतः पूर्वं तदन्तविधिर्भवति तथैव इत उत्तरमपि तदन्तविधौ 'परमपारायणं वर्तयति' इत्यत्रापि 'पारायणतुरायणचान्द्रायणं वर्त्तयति' इत्यनेन ठञ् स्यादिति वाच्यम्, इत ऊर्ध्वं संख्यापूर्वपदानामेव तदन्तग्रहणं तदपि तद्धितलुकि सति न भवति तथा च वार्त्तिकम्—'संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि' इति। अत एव हि सङ्ख्यापूर्वपदाच्छूर्पान्ताद्द्विशूर्पशब्दात् 'शूर्पादेरञन्यतरस्याम्' इत्यनेन प्राप्तस्य अञष्ठञो वा 'अध्यर्धे'ति लुक् द्विशूर्पशब्दो लुगन्तः। ततश्च तस्मात् क्रितेऽर्थे 'शूर्पादञ्' इति न भवति, लुकि सति तदन्तग्रहणाभावात्। किन्तु औत्सर्गिकठञ्प्रत्यये उत्तरपदवृद्धौ द्विशौर्पिकमिति सिद्ध्यति। अस्य ठञो लुक् तु न भवति तस्य द्विगुनिमित्तत्वाभावात्।

इति छयतो पूर्णोऽवधिः।

—०—

# अथ आर्हीयप्रकरणम्

**परमनैष्किकः** (ई० ४२)—परमनिष्केण क्रीतमिति विग्रहे 'असमासे निष्कादिभ्यः' इति सूत्रे असमासे इत्युक्तत्वात् 'प्राग्वतेष्ठञ्' इत्यनेन औत्सर्गिकठञ् प्रत्यये ठस्य इकादेशे 'परिमाणान्तस्यासंज्ञाशाणयोः' इति सूत्रेण उत्तरपदवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**यवापूप्यम्** (ई० ४५)—यवापूपस्य विकार इति विग्रहे 'विभाषा हविरपूपादिभ्यः' इत्यनेन यत्प्रत्यये 'यस्येति च' इत्यकारलोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ तस्यामाद्यादेशे 'यवापूप्यम्' इति। न चोक्तसूत्रेणापूपादिशब्दादेव यत्प्रत्ययो विधीयते न तु तदन्तात्, तथाचात्र यत्प्रत्ययो न स्यादिति वाच्यम्, 'असमासे निष्कादिभ्यः' इत्यत्रासमासग्रहणेनेतः प्राक्तदन्तविधिर्भवतीति ज्ञापनेनादोषात्।

**अर्धद्रौणिकम्** (ई० ४४)—अर्धद्रोणेन क्रीतमिति विग्रहे 'असमासे निष्कादिभ्यः' इत्यत्र द्रोणशब्दस्य निष्कादित्वेऽपि तत्राऽसमासग्रहणेन समासे ठकोऽप्राप्तौ ठञि ञित्वादादिवृद्धौ प्राप्तायाम् 'अर्धात्परिमाणस्य पूर्वस्य तु वा' इत्यनेनोत्तरपदस्यादेरचो नित्येन वृद्धौ पूर्वपदस्य च विकल्पेन विधानात्तदभावपक्षे

वृद्ध्यभावात् ठस्येकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'अर्धद्रौणिकम्' इति। पक्षे–'आर्धद्रौणिकम्' इति च भवति।

**नातः परस्य** (ई० ४४, ४५)—अर्धात्परस्य परिमाणाऽकारस्य वृद्धिर्नस्यात्पूर्वपदस्य तु वा, ञिदादावित्यस्यार्थः। अत्रात्ग्रहणाऽभावे 'आर्धकौडविकम्' इत्यत्राकारस्य वृद्धिनिषेधापत्तिः स्यादतस्तद्ग्रहणम्। तत्र दीर्घस्याकारस्य वृद्धिनिषेधे फलाभावेन ह्रस्वस्यैव वृद्धिनिषेधे सिद्धे तपरकरणं किमर्थमिति प्रश्नः? एवं सति अर्धखार्या भवा अर्धखारी, सा भार्या यस्येति विग्रहे 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाऽधिकरणे' इति प्राप्तपुंवद्भावस्य 'वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे' इत्यनेन निषेधो न स्यात्, पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिम्प्रति फलोपहितनिमित्तत्वाऽभावादतस्तद्ग्रहणमित्युत्तरम्।

**शतिकम्** (ई० ५६)—शतेन क्रीतमित्यर्थे 'शताच्च ठन्यतावशते' इत्यनेन ठनि ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शतिकम्' इति। यत्प्रत्यये कृते तु 'शत्यम्' इति भवति।

**बहुकः** (ई० ४०)—बहुभिः क्रीतः इत्यर्थे 'संख्याया अतिशदन्तायाः कन्' इति कनि विभक्तिकार्ये 'बहुकः' इति।

**त्रिंशत्कः**—(ई० ५५)—त्रिंशता क्रीतमिति विग्रहे 'तेन क्रीतम्' इति ठञष्ठस्य तकारात्परत्वात् कप्रत्यये विभक्तिकार्ये 'त्रिंशत्कः' इति। विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्' इति सूत्रे असंज्ञायामित्युक्तत्वात् ड्वुन्नेति।

**अर्धिकः** (ई० ५४)—अर्धेन क्रीतः इति विग्रहे 'अर्धाच्चेति वक्तव्यम्' इति वार्तिकेन टिठन्प्रत्यये ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'अर्धिकः' इति।

**प्रतिकः** (ई० ३८)—कार्षापणेन क्रीतः इति विग्रहे 'कार्षापणाट्टिठन् वक्तव्यः प्रतिरादेशश्च' इति वार्तिकेन टिठन्प्रत्यये कार्षापणस्य प्रत्यादेशे ठस्येकादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'प्रतिकः' इति।

**शातमानम्** (ई० ४३)—शतमानेन क्रीतमिति विग्रहे 'शतमानविंशतिकसहस्रवसनादण्' इति सूत्रेण ठञमपवाद्य अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शातमानम्' इति।

**साहस्रम्** (ई० ४१)—सहस्रेण क्रीतमिति विग्रहे 'शतमानविंशतिकसहस्रवसनादण्' इति सूत्रेण 'संख्याया अतिशदन्तायाः' इति प्राप्तं कन्प्रत्ययं प्रबाध्य अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे 'साहस्रम्' इति।

**द्विकंसम्** ( ई० ५४ )—द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहे 'संख्याया अतिशदन्तायाः' इति कनि 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इति तस्य लुकि 'विभक्तिकार्ये 'द्विकंसम्' इति ।

**बहुनिष्कम्** ( ई० ४१ )—बहुनिष्केण क्रीतमिति विग्रहे 'संख्याया अतिसदन्तायाः कन्' इति कनि 'द्वित्रिपूर्वान्निष्कात्' इति सूत्रस्य 'बहुपूर्वाच्चेति वक्तव्यम्' इति वार्तिकेन कनो लुकि विभक्तिकार्ये 'बहुनिष्कम्' इति लुगभावे उत्तरपदस्य वृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'बहुनैष्किकम्' इति ।

**खारीकम्** ( ई० ३९, ४०, ५६ )—खार्या क्रीतमिति विग्रहे 'खार्या ईकन्' इति सूत्रस्य 'केवलायाश्चेति वक्तव्यम्' इति वार्तिकेन केवलात् तृतीयान्तात् खारीशब्दादपि ईकन्प्रत्यये 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'खारीकम्' इति ।

**द्विपाद्यम्** ( ई० ३८ )—द्वाभ्यां पादाभ्यां चतुर्थांशाभ्यां क्रीतमित्यर्थे 'पणपादमाषशताद्यत्' इति यत्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'द्विपाद्यम्' इति ।

**द्वैशाणम्** ( ई० ४२, ४६ )—द्वाभ्यां शाणाभ्यां क्रीतमिति विग्रहे 'द्वित्रिपूर्वादण् च' इति सूत्रेण अणि 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र संज्ञाशाणपर्युदासादुत्तरपदवृद्ध्यभावे आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'द्वैशाणम्' इति । प्रकृतिसूत्रेण चकारात् यत्प्रत्यये कृते तु 'द्विशाण्यम्' इति । ठञि तु तस्य 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इत्यनेन लुकि 'द्विशाणम्' इति च भवति ।

**यशस्यः** ( ई० ४१,४३ )—यशसो निमित्तं संयोग उत्पातो वेति विग्रहे 'गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्' इति यत्प्रत्यये विभक्तिकार्ये उक्तं रूपं जातम् ।

**सार्वभौमः** ( ई० ३६, ४७ )—सर्वभूमेरीश्वरः इति विग्रहे सर्वभूमिशब्दात् 'तत्रेश्वरः' इति अण्प्रत्यये 'अनुशतकादीनां च' इत्युभयपदवृद्धौ भत्वादिलोपे विभक्तिकार्ये 'सार्वभौमः' इति ।

**लौकिकः** ( ई० ५५ )—लोकेषु विदितः इत्यर्थे 'लोकसर्वलोकाट्ठञ्' इति ठञि आदिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'लौकिकः' इति ।

**शतिकः** ( ई० ५६ )—शतमस्मिन् वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते इति विग्रहे 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' इति सूत्रविधानात्

'शताच्च ठन्यतावशते' इति सूत्रेण ठनि ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'शतिकः' इति। यत्प्रत्यये तु 'शत्यः' इति भवति।

**आढकीना** ( ई० ३९ )—आढकं सम्भवति अवहरति पचति वेति विग्रहे 'आढकाचितपात्रात्खोऽन्यतरस्याम्' इत्यनेन खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये 'आढकीना' इति। पक्षे ठञि 'आढकिकी' इति।

**आचितिकी** ( ई० ४० )—आचितं सम्भवति अवहरति पचति वेति विग्रहे 'आढकाचित—' इति विकल्पपक्षे 'प्राग्वहतेष्ठञ्' इति ठञ्प्रत्यये पर्जन्यवल्लक्षणया ञित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वात् 'द्विगोः' इति ङीपि विभक्तिकार्ये 'आचितिकी' इति।

**द्वैकुलिजिकी** ( ई० ४५ )—द्विकुलिजं सम्भवति, अवहरति, पचति वेति विग्रहे 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' इत्यत्र परिमाणपर्युदासात् ठगभावे 'प्राग्वहतीयष्ठञ्' इति ठञि तस्य 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इति लुकि प्राप्ते तं प्रबाध्य 'कुलिजाल्लुक्खौ च' इत्यनेन विभाषया लुकि स्त्रीत्वात् 'द्विगोः' इति ङीपि विभक्तिकार्ये 'द्विकुलिजी' इति। खप्रत्यये कृते खस्य इनादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वविवक्षायां टापि विभक्तिकार्ये 'द्विकुलिजिना' इति। सूत्रे चकारोपादानात् छप्रत्ययपक्षे ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वविवक्षायां ङीपि विभक्तिकार्ये 'द्विकुलिजिकी' इति। लुगभावपक्षे ञित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे स्त्रीत्वविवक्षायां ङीपि विभक्तिकार्ये 'द्वैकुलिजिकी' इति। 'परिमाणान्तस्यासंज्ञाशाणयोः' इति सूत्रे परिमाणान्तस्येत्यत्र असंज्ञाशाणकुलिजानामित्युक्तेर्नोत्तरपदवृद्धिः।

**पञ्चकः** ( ई० ४१, ४४ )—पञ्च अंशो वस्नं भृतिर्वा अस्येति विग्रहे 'सोऽस्यांशवस्नभृतयः' इति सूत्रेण यथाविहितप्रत्ययविधानात् 'संख्याया अतिशदन्तायाः कन्' इत्यनेन पञ्चन्शब्दात् कनि नलोपे विभक्तिकार्ये 'पञ्चकः' इति। अत्र अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। इत्यवधेयम्।

**अष्टकम्** ( ई० ५६ )—अष्टावध्यायाः परिमाणमस्येति विग्रहे 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति सूत्रेण यथाविहितप्रत्ययविधानात् स्वार्थे कप्रत्यये नलोपे विभक्तिकार्ये 'अष्टकम्' इति। सूत्रमिति शेषः।

**सप्तदश** ( ई० ५५ )—शप्तदश मन्त्राः परिमाणमस्येति विग्रहे 'स्तोमेऽविधिः' इति वार्तिकेन डप्रत्यये 'टेः' इति टिलोपे विभक्तिकार्ये 'सप्तदश' इति ।

**पङ्क्तिविंशति०** ( ई० ३७, ३९, ४५, ५४ )—'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' इति सूत्रस्वरूपम् । 'तदस्य परिमाण'मित्यनुवर्त्तते । तथा च एते रूढिकशब्दाः तदस्य परिमाणमित्यर्थे निपात्यन्ते इत्यर्थः । यथाक्रममुदाहरणानि यथा—पञ्च पादाः परिमाणमस्येति विग्रहे पञ्चन् शब्दात्तिप्रत्ययः प्रकृतेष्टिलोपः, 'चोः कुः' इत्यनेन चकारस्य कुत्वम् , अनुस्वारपरसवर्णौ पङ्क्तिरिति रूपम् । पङ्क्तिशब्दो हि नानार्थः, तथा हि—अस्ति क्रमसन्निवेशे–ब्राह्मणपङ्क्तिः, पिपीलिकापङ्क्तिरिति । अस्ति च दश संख्यायां पङ्क्तिरथ इति दशरथ इत्यर्थः । अस्ति हि छन्दोविशेषे यस्य पञ्चाक्षराः पञ्चपादाः । अत्रैवावयवार्थोऽयं शब्दो नान्यत्र इत्यवधेयम् । 'पञ्चद्दशतौ वर्गे वा' इत्यग्रे वक्ष्यमाणत्वात्–दशानां वर्गो दशत् , द्वौ दशतौ परिमाणमस्य संघस्येति विग्रहे–शतिच्–प्रत्ययः, प्रकृतेर्विन्भावः, अपदत्वं च, अपदत्वनिपातनान्नकारस्यानुस्वारः । त्रयोदशतः परिमाणमस्य संघस्येति विग्रहे त्रिंशत् , शत् प्रत्ययः, प्रकृतेस्त्रिन्भावश्च, ततो नस्यानुस्वारः । चत्वारो दशतः परिमाणमस्य संघस्येति विग्रहे चत्वारिंशत्–शत् प्रत्ययः, प्रकृतेः चत्वारिन् भावश्च, ततो नस्यानुस्वारः पञ्चदशतः परिमाणमस्येति विग्रहे पञ्चाशत्—शत्प्रत्ययः प्रकृतेः पञ्चाभावश्च । षड् दशतः परिमाणमस्य संघस्येति विग्रहे–षष्टिः, तिप्रत्ययः प्रकृतेः षष् , अपदत्वञ्च, अपदत्वात् जश्त्वाभावः । सप्तदशतः परिमाणमस्य संघस्येति सप्ततिः—तिप्रत्ययः प्रकृतेः सप्तादेशः । अष्टौ दशतः परिमाणमस्य संघस्येति अशीतिः–तिप्रत्ययः प्रकृतेरशीत्यादेशः । नव दशतः परिमाणमस्य संघस्येति नवतिः—तिप्रत्ययः प्रकृतेर्नवादेशः । दश दशतः परिमाणमस्य संघस्येति शतम्—तप्रत्ययः प्रकृतेः शादेशश्च । अत्रेदम्बोध्यम्—'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इत्यमरकोशात् विंशत्याद्याः शब्दाः संख्यायां संख्येये च वर्त्तन्ते उभयत्राप्येकवचनान्ताः । तेन विंशतिर्गावो विंशतिर्गवामित्यादि सिद्धम् । तत्र नवत्यन्ताः शब्दाः 'तासु चावनतेः स्त्रियः' इत्यमरात् स्त्रियां वर्तन्ते । एतानि चाव्युत्पन्नप्रातिपदिकानि भाष्ये प्रतिपादितानि । एषां प्रदर्शनन्तूदाहरणमात्रम् , सहस्रादयोऽप्येवं व्युत्पाद्या इति ।

**वैरङ्गिकः** ( ई० ३८ )—विरागं नित्यमर्हतीति विग्रहे 'विरागं विरङ्गं च' इति गणसूत्रेण विरागशब्दस्य विरङ्गादेशे चकाराद् आर्हीयष्ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे 'वैरङ्गिकः' इति ।

**अर्घ्यः** ( ई० ४०, ४१ )—अर्घमर्हतीति विग्रहे 'दण्डादिभ्यो यत्' इति यत्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'अर्घ्यः' इति ।

**पात्र्यः** ( ई० ४२ )—पात्रमर्हतीत्यर्थे 'पात्राद्धञ्च' इति सूत्रेण चकाराद् यत्-प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'पात्र्यः' इति ।

**कडङ्करीयः** ( ई० ४६ )—कडङ्करं माषमुद्गादिकाष्ठमर्हतीति विग्रहे 'कडङ्क-रदक्षिणाच्छ च' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**दक्षिण्यः** ( ई० ५४ )—दक्षिणामर्हतीत्यर्थे 'कडङ्करदक्षिणाच्छ च' इति सूत्रेण चकाराद् यत्प्रत्यये 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

इति आर्हीयप्रकरणम् ।



# अथ ठञधिकारे कालाधिकारप्रकरणम्

**यौजनशतिकः** ( ई० ४७ )—योजनशतं गच्छतीति विग्रहे 'क्रोशशतयो-जनशतयोरुपसंख्यानम्' इति वार्तिकेन ठञ्प्रत्यये ञित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'यौजनशतिकः' इति ।

**पान्था** ( ई० ५३ )—पन्थानं नित्यं गच्छतीत्यर्थे 'पन्थो ण नित्यम्' इति सूत्रेण द्वितीयान्तात् पथिन् शब्दात् णप्रत्यये प्रकृतेः पन्थादेशे च कृते णित्वादादि-वृद्धौ स्त्रीत्वविवक्षायां टापि विभक्तिकार्ये 'पान्था' इति ।

**वारिपथिकम्** ( ई० ५६ )—वारिपथेन गच्छति आहृतं वेत्यर्थे 'आहृत-प्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्' इति वार्तिकेन ठञ्प्रत्यये ञित्वा-दादिवृद्धौ ठस्य कादेशे नलोपे उक्तं रूपं सिद्धम् ।

**द्विमास्यः** ( ई० ४१ )—द्वौ मासौ भूतः इत्यर्थे द्वितीयान्तात् मासशब्दात् 'द्विगोर्यप्' इति यप्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'द्विमास्यः' इति ।

**षाण्मासिकः** ( ई० ४०, ५५ )—षण्मासं भूतः इत्यर्थे 'षण्मासाण्ण्यच्च' इति सूत्रे यबप्यनुवर्तनात् यप्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'षण्मास्यः' इति । ण्यत्पक्षे आदिवृद्धौ 'षाण्मास्यः' इति । चकारात् ठञि कृते आदिवृद्धौ ठस्य इकादेशे 'षाण्मासिकः' इति ।

**समीनः** ( ई० ३८ )—समामधीष्टो भृतो भूतो भावी वेति विग्रहे 'समायाः खः' इति खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'समीनः' इति सिद्धम् ।

**संख्यायाः संवत्सरसंख्यस्य च** ( ई० ३६, ४१ )—सङ्ख्यायाः परस्य संवत्सरसंख्याशब्दस्योत्तरपदस्य वृद्धिः स्याञ्ञिदादाविति तदर्थः । नन्वस्मिन् सूत्रे संवत्सरग्रहणाभावेऽपि 'द्विसांवत्सरिकः' इत्यत्र संवत्सरस्य द्वादशपरिमाणतया 'परिमाणान्तस्याऽसंज्ञाशाणयोः' इत्यनेनैवोत्तरपदवृद्धिसिद्धौ रूपं सेत्स्यत्येवेति संवत्सरग्रहणं व्यर्थमिति चेत्? सत्यम्, परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थं संवत्सरग्रहणस्यावश्यकत्वात् । अत एव 'द्वैसमिकः' इत्यत्रोत्तरपदवृद्धिर्न तथा 'द्विवर्षा' इत्यत्र ङीब् न भवति, परिमाणपर्युदासेन पर्युदासाभावात् 'अपरिमाणविस्ताचितकम्बल्येभ्योऽतद्धितलुकि' इति निषेधप्रवृत्तेः ।

**द्विवर्षः** ( ई० ५४ )—द्वाभ्यां वर्षाभ्यां निर्वृतः द्वौ वर्षे अधीष्टः भृतः भूतो वेत्यर्थे 'वर्षाल्लुक् च' इति खप्रत्यये ठञ्प्रत्यये च वा कृते 'चित्तवति नित्यम्' इति सूत्रेण लुकि विभक्तिकार्ये 'द्विवर्षः' इति ।

**षष्टिकः** ( ई० ३९, ४२, ५३ )—षष्टिरात्रेण पच्यन्ते' इत्यर्थे 'षष्टिकाः षष्टिरात्रेण पच्यन्ते' इति सूत्रेण कन्प्रत्यये रात्रशब्दस्य लोपे च कृते विभक्तिकार्ये 'षष्टिकः' इति ।

**माहानाम्निकः** ( ई० ३६, ४६ )—महानाम्नीनां ब्रह्मचर्यमस्येति विग्रहे 'महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्यः उपसंख्यानम्' इति वार्तिकेन ठञि ञित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । महानाम्नीशब्दस्य ऋग्विशेषेषु रूढस्य नित्यस्त्रीलिङ्गत्वात् भाषितपुंस्कत्वाभावात् 'भस्याढे' इति पुंवत्वं नेति । हरदत्तस्तु 'महानामिकम्' इत्येव भाष्ये उदाहृतत्वात् 'भस्याढे' इत्यत्र पुंवत्वं भवत्येवेत्याह ।

**चातुर्मासी** ( ई० ४२ )—चतुर्षु मासेष्वतीतेष्वित्यर्थे 'अण् संज्ञायाम्' इति वार्तिकेन अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे स्त्रीत्वविवक्षायां ङीपि विभक्तिकार्ये 'चातुर्मासी' इति ।

इति ठञधिकारे कालाधिकारप्रकरणम् ।

# अथ ठञ्विधिप्रकरणम्

**सान्तापिकः** ( ई० ४०, ५५ )—सन्तापाय प्रभवति इति विग्रहे 'तस्मै प्रभवति सन्तापादिभ्यः' इति सूत्रेण ठञि ञित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'सान्तापिकः' इति।

**कार्मुकम्** ( ई० ४६ )—कर्मणे प्रभवति इति विग्रहे 'कर्मण उकञ्' इति सूत्रेण उकञ्प्रत्यये ञित्वादादिवृद्धौ टिलोपे तद्धितान्तत्वात् सौ विभक्तिकार्ये 'कार्मुकम्' इति सिद्धम्।

**प्राशित्रम्** ( ई० ४७ )—प्राशिता प्राप्तोऽस्येत्यर्थे 'उपवस्त्रादिभ्यः उपसंख्यानम्' इति वार्तिकेन अण्प्रत्यये णित्वादादिवृद्धौ ऋकारस्य यणि विभक्तिकार्ये 'प्राशित्रम्' इति।

**श्राद्धम्** ( ई० ४१ )—श्रद्धाप्रयोजनमस्येति विग्रहे 'चूडादिभ्य उपसंख्यानम्' इति वार्तिकेन अणि णित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'श्राद्धम्' इति।

**व्याकरणसमापनीयः** ( ई० ३६ )—व्याकरणं समापनीयमस्येत्यर्थे 'समापनात्सपूर्वपदात्' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**ऐकागारिकः** ( ई० ३९ )—एकम् ( असहायम् ) अगारं प्रयोजनमस्य मुमुषिषोः ( चौर्यं कर्तुमिच्छोः ) चौरस्येति विग्रहे 'ऐकागारिकट् चौरे' इति सूत्रेण इकट्प्रत्यये निपातनादनेनैव आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'ऐकागरिकः' इति।

**आकालिकः** ( ई० ४२ )—समानकालावाद्यन्तौ यस्येति विग्रहे 'आकालिकडाद्यन्तवचने' इति सूत्रेण इकट्प्रत्यये तस्मिन्परे समानकालशब्दस्य निपातनाद् आकालादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आकालिकः' इति।

इति ठञ्विधिप्रकरणम्।

# अथ भावकर्मार्थप्रकरणम्

**विधिवत्** ( इ० ५४ )—विधिमर्हतीति विग्रहे 'तदर्हम्' इति सूत्रेण वति-प्रत्यये विभक्तिकार्ये 'विधिवत्' इति । विधिं लब्धुं योग्यं भवतीत्यर्थः ।

**न नञ्पूर्वा** ( ई० ३९ )—'न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधक-तरसलसेभ्यः' इति सूत्रम् । त्वतलविधेरूर्ध्वं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस, एतान्वर्जयित्वेत्यर्थः । उदाहरणं यथा—'अपतित्वम्' 'अपटुत्वम्', अत्र यथाक्रमं 'पत्यन्तपुरोहितादिभ्यो यक्', 'इग-न्ताच्च लघुपूर्वात्' इत्यनेन यगणौ न भवतः । नञ्पूर्वात्किम्—बार्हस्पत्यम्' अत्र 'पत्यन्तपुरोहितादिभ्यो यक्' इत्यनेन यक्, नञ्पूर्वात्परस्यैव निषेधेन प्रकृते तदभावान्न निषेधः । ननु 'तत्पुरुषात्' इति किमर्थमिति चेत् ? नास्य पटवः सन्तीत्यपटुस्तस्य भाव इति विग्रहे 'इगन्ताच्च लघुपूर्वात्' इत्यनेनाणि सति 'आपटवम्' इति भवति तत्र अपटुशब्दस्य बहुव्रीहित्वात्तत्पुरुषत्वाभावेनाऽस्याणो-निषेधापत्तेरतस्तदावश्यकम् । अचतुरेत्यादिग्रहणाभावे तु—आचतुर्यम्' आसङ्गत्यम्' आलवण्यम्' आवटयम्' आयुध्यम्, आकत्यम्, आरस्यम्, आलस्यम्, इत्यादिषु यथाक्रमं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यनेन ब्राह्मणादित्वात् ष्यञ् नञ्तत्पुरुषान्न स्यादतस्तत्पर्युदास आवश्यकः ।

**अपटुत्वम्** ( ई० ५३ )—पटोर्भावः पटुत्वम्, न पटुत्वम् अपटुत्वम् । अत्र 'इगन्ताच्च लघुपूर्वात्' इत्यनेन अण्प्राप्तौ 'न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवण-वटयुधकतरसलसेभ्यः' इति निषेधे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**प्रथिमा** ( ई० ३९, ४७ )—पृथोर्भावः 'प्रथिमा' । अत्र 'पृथ्वादिभ्य इमनिज्वा' इति सूत्रेण पृथशब्दाद् इमनिच्प्रत्यये 'अनुबन्धकार्ये 'र ऋतो हलादे-र्लघोः' इत्यनेन ऋकारस्य र भावे 'टेः' इति सूत्रेण गुणं बाधित्वा टेर्लोपे स्वादिकार्ये 'प्रथिमा' इति । इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि णित्वादादिवृद्धौ रपरत्वे गुणेऽवादेशे विभक्तिकार्ये 'पार्थवम्' इति ।

**म्रदिमा** ( ई० ४० )—मृदोर्भाव इति विग्रहे 'पृथ्वादिभ्य इमनिज्वा' इति इमनिच्प्रत्यये अनुबन्धलोपे 'र ऋतो हलादेर्लघोः' इति ऋकास्य रभावे 'टेः' इति टिलोपे स्वादिकार्ये 'म्रदिमा' इति । इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि आदिवृद्धौ रपरत्वे गुणेऽवादेशे विभक्तिकार्ये 'मार्दवम्' इति ।

**शुक्लिमा** ( ई० ५५ )—शुक्लस्य भावः इत्यर्थे 'वर्णदृढादिभ्यः ष्यञ्च' इति सूत्रेण चकाराद् इमनिच्प्रत्यये अनुबन्धकार्ये 'टेः' इति टिलोपे स्वादिकार्ये 'शुक्लिमा' इति ।

**ब्राह्मण्यम्** ( ई० ३९ )—ब्राह्मणस्य भावः कर्म वेति विग्रहे षष्ठ्यन्तात् ब्राह्मण-शब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण ष्यञ्प्रत्यये पर्यन्यवल्लक्ष-णया आदिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'ब्राह्मण्यम्' इति ।

**आर्हन्ती** ( ई० ५६ )—अर्हतो भावः कर्म वेति विग्रहे 'अर्हतो नुम् च' इति वार्तिकेन अर्हत् शब्दात् ष्यञ्प्रत्यये प्रकृतेर्नुमागमे च कृते ञित्वादादिवृद्धौ अनु-स्वारे परसवर्णे च कृते विभक्तिकार्ये 'आर्हन्त्यम्' इति । लोकात् नपुंसकत्वं स्त्री-त्वञ्च । स्त्रीत्व-विवक्षायां आर्हन्त्यशब्दात् 'षिद्गौरादिभ्यश्च' इति ङीषि 'हलस्त-द्धितस्य' इति यलोपे विभक्तिकार्ये 'आर्हन्ती' इति ।

**त्रैस्वर्यम्** ( ई० ४१ )—त्रयः स्वराः इति विग्रहे प्रथमान्तात् त्रिस्वर-शब्दात् 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्' इति वार्तिकेन ष्यञ्प्रत्यये ञित्वादा-दिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'त्रैस्वर्यम्' इति ।

**स्तेयम्** ( ई० ४६ )—स्तेनस्य भावः कर्म वेति विग्रहे 'स्तेनान्नलोपश्च' इति सूत्रेण यत्प्रत्यये नेति संघातस्य लोपे च कृते निभक्तिकार्ये 'स्तेयम्' इति । न च नकारमात्रलोपेऽपि 'यस्येति च' इत्यकारलोपात् 'स्तेयम्' इति सिद्धौ नेति संघातस्य लोपविधानं व्यर्थमिति वाच्यम् , 'अचः परस्मिन्—' इति अकारलोपस्य स्थानिवत्वेन तत्राश्रित्य एकारस्य अयादेशप्रसंगात् । न च संघातग्रहणेऽपि 'अलोन्त्यस्ये'त्य-कारस्यैव लोपः स्यादिति वाच्यम् , 'नानार्थकेऽलोन्त्यविधिरिति परिभाषया तन्नि-षेधात् ।

**दूत्यम्** ( ई० ४० )—दूतस्य भावः कर्म वेति विग्रहे 'दूतवणिग्भ्यां च' इति वार्तिकेन यत्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'दूत्यम्' इति ।

**पौरोहित्यम्** ( ई० ४३ )—पुरोहितस्य भावः कर्म वेति विग्रहे 'पत्यन्त-पुरोहितादिभ्यो यक्' इति सूत्रेण यक्प्रत्यये कित्वादादिवृद्धौ 'यस्येति च' इत्यकार-लोपे विभक्तिकार्ये 'पौरोहित्यम्' इति ।

**आधिराज्यम्** ( ई० ४५ )—अधिको राजा अधिराजः । अधिराजस्य भावः कर्म वेति विग्रहे 'राजासे' इति गणसूत्रे 'असे' इति पर्युदासात् यगभावे

'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण ष्यञि ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आधिराज्यम्' इति ।

**यौवनम्** ( ई० ५४ )—यूनोर्भावः कर्म वेति विग्रहे 'हायनान्तयुवादिभ्योऽण्' इत्यणि णित्वादादिवृद्धौ विभक्तिकार्ये 'यौवनम्' इति । 'अन्' इति प्रकृतिभावान्न टिलोपः ।

**स्थाविरम्** ( ई० ५६ )—स्थविरस्य भावः कर्म वेति विग्रहे 'हायनान्तयुवादिभ्योऽण्' इत्यणि णित्वादादिवृद्धौ विभक्तिकार्ये 'स्थाविरम्' इति ।

**श्रौत्रम्** ( ई० ४२ )—श्रोत्रियस्य भावः कर्म वेति विग्रहे 'श्रोत्रियस्य यलोपश्च' इति वार्तिकेन श्रोत्रियशब्दादणि यकाराकारसंघातस्य लोपे रेफादिकारस्य 'यस्येति च' इति लोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् । यकारादकारस्य 'यस्येति च' इति लोपे सति यकारमात्रस्य अनेन लोपे तु रेफादिकारस्य यण् स्यात् ।

**तदवेतस्येत्यादि** ( ई० ३७ )—पंक्तेरयमाशयः—'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' इति सूत्रम् । गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचिनश्च षष्ठ्यन्ताद्भावकर्मणोर्वुञ् स्यात् श्लाघादिषु विषयेषु इति तदर्थः । ननु गोत्रपदेन–'अपत्यधिकारादन्यत्र प्रवराध्यायप्रसिद्धमेव गृह्यते, अत्रत्याकारस्य—अधिक्षेप इत्यर्थः । किन्तु 'तदवेत' पदस्य कोऽर्थः इति जिज्ञासायामाह– 'तदवेत' इति । अत्र तच्छब्देन गोत्रचरणयोर्भावकर्मणी विवक्षिते । तथा च ते=गोत्रचरणयोर्भावकर्मणी अवेतः प्राप्तः, यद्वा अवपूर्वकादिणो ज्ञानमर्थः । द्वितीयेति योगविभागात्समासः ।

इति भावकर्माधिकारप्रकरणम् ।



## अथ पाञ्चमिकप्रकरणम्

**शालेयम्** ( ई० ३९ )—शालीनां भवनं क्षेत्रमिति विग्रहे 'व्रीहिशाल्योर्ढक्' इति ढकि ढस्य एयादेशे 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'शालेयम्' इति । पर्यन्यवल्लक्षणया कित्वादादिवृद्धिः ।

**औमीनम्** ( ई० ४० )—उमानां भवनं क्षेत्रमित्यर्थे 'विभाषातिलमाषोमाभङ्गाणुभ्यः' इति विकल्पपक्षे 'धान्यानां भवने क्षेत्रे खञ्' इति खञि ञित्वादादिवृद्धौ खस्य ईनादेशे 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'औमीनम्' इति । उमेति धान्यविशेषस्य संज्ञा ।

**सर्वचर्मीणः** ( ई० ५३, ५५ )—सर्वश्चर्मणा कृतः इति विग्रहे 'सर्वचर्मणः कृतः खखञौ' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'न स्तद्धिते' इति टिलोपे णत्वे विभक्तिकार्ये 'सर्वचर्मीणः' इति । खञ्पक्षे 'सार्वचर्मीणः' इति ।

**सर्वपथीनः** ( ई० ४६ )—सर्वपथान् व्याप्नोतीति विग्रहे 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'सर्वपथीनः' इति ।

**आप्रपदीनः** ( ई० ४१ )—पादस्याग्रं प्रपदं, तन्मर्यादीकृत्य आप्रपदम् । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः । आप्रपदं प्राप्नोतीति विग्रहे 'आप्रपदं प्राप्नोति' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**परम्परीणः** ( ई० ४७ )—परांश्च परतरांश्चानुभवति इति विग्रहे द्वन्द्वसमासे सति परपरतरशब्दात् 'परोवरपरम्परपुत्रपौत्रमनुभवति' इति सूत्रेण खप्रत्यये तत्सन्नियोगेन प्रकृतेः निपातनात् परम्परभावे च कृते खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे णत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् । कल्याणपरम्परेत्यादौ परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गं ज्ञेयम् ।

**पारावारीणः** ( ई० ५४ )—अवारपारं गामीति विग्रहे 'अवारपारात्यन्तानुकामं गामी' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे णत्वे विभक्तिकार्ये 'अवारपारीणः' इति । 'अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्' इति वार्तिकोक्तत्वात् अवारशब्दात् खप्रत्यये 'अवारीणः इति । पारशब्दात् खप्रत्यये 'पारीणः' इति । पारावारशब्दात् खप्रत्यये तु 'पारावारीणः' इति च रूपं भवति ।

**समांसमीना** ( ई० ४३, ४५, ५६ )—'समायां समायां विजायते इति विग्रहे 'समां समां विजायते' इति सूत्रेण समायां समायां विजायते इत्यर्थे सप्तम्यन्तद्वयसमुदायात् विजायत इत्यर्थे खप्रत्यये प्रातिपदिकत्वादुत्तरपदस्य सुब्लोपे पूर्वपदे च केवलं निपातनात् यलोपे च जाते खस्य ईनादेशे 'यस्येति च' इति आकारलोपे स्त्रीत्वाट्टापि विभक्तिकार्ये उक्तं रूपं सिद्धम् । या गौः प्रतिवर्षं प्रसूयते सा एवमुच्यते । नच सप्तम्यन्तद्वयसमुदायात् खप्रत्ययोत्पत्तौ तदन्तस्य समुदायस्य प्रातिपदिकत्वात् तदवयवयोः सप्तम्योर्लुकि नोक्तरूपं सिद्धयतीति वाच्यम्

प्रकृतिसूत्रेण पूर्वपदे विभक्ते तदवयवस्य यकारस्य लोपः, अवशिष्टस्य विभक्त्यन्तस्य लोपाभावश्च निपात्यते, तेन क्षत्यभावात् ।

**आगवीनः** ( ई० ४० )—गोशब्दो गोप्रत्यर्पणे लाक्षणिकः । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे 'गोस्त्रियोः' इति ह्रस्वे 'आगु' इति, तस्मात् 'आगवीनः' इति सूत्रेण गिपातनात् खप्रत्यये खस्य ईनादेशे 'ओर्गुणः' इति गुणेऽवादेशे विभक्तिकार्ये 'आगवीनः' इति । गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः ।

**अनुगवीनः** ( ई० ५३ )—गोः पश्चादिति विग्रहे पश्चादर्थे अनोरव्ययीभावे ह्रस्वत्वे 'अनगु' इति, तस्मात् 'अनुगवलं गामी' इति सूत्रेण खप्रत्यये खस्य ईनादेशे 'ओर्गुणः' इति गुणेऽवादेशं विभक्तिकार्ये 'अनुगवीनः' इति ।

**अध्वनीनः** ( ई० ५५ )—अध्वानमलं गच्छतीत्यर्थे 'अध्वनो यत्खौ' इति सूत्रेण खप्रत्यये खस्य ईनादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**कौपीनम्** ( ई० ५४ )—कूपपतनमिच्छतीत्यर्थे 'शालीनकौपीने अधृष्टाकार्ययोः' इति सूत्रेण कूपशब्दात् खञि ञित्वादादिवृद्धौ खस्य ईनादेशे 'यस्येति च' इत्यकारलोपे 'कौपीनम्' इति । पापमित्यर्थः ।

**हैयङ्गवीनम्** ( ई० ४४ )—ह्योगोदोहस्य विकारो हैयङ्गवीनः । अत्र 'हैयङ्गवीनं संज्ञायाम्' इति सूत्रेण निपातनात् गोदोहस्य हियङ्गुरादेशे खञ्प्रत्यये च कृते ञित्वादादिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशे विभक्तिकार्ये हैयङ्गवीनमिति । नवनीतमित्यर्थः ।

**कर्णजाहम्** ( ई० ४०,४६ )—कर्णस्य मूलमित्यर्थे 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति सूत्रेण जाहच्प्रत्यये विभक्तिकार्ये 'कर्णजाहम्' इति ।

**विना** ( ई० ४३ )—विनञ्भ्यां नानाञौ नसह' इति सूत्रेणात्र वेर्नाप्रत्यये विभक्तिकार्ये विनेति । पृथगित्यर्थः ।

**संकटम्** ( ई० ४२ )—क्रियाविशिष्टसाधनवाचकात् संशब्दात् 'सम्प्रोदश्च कटच्' इति सूत्रेण स्वार्थे कटच्प्रत्यये विभक्तिकार्ये 'संकटम्' इति ।

**अश्वषङ्गवम्** ( ई० ५४ )—अत्र 'षट्त्वे षड्गवच्' इति वार्तिकेन षड्गवच् प्रत्यये विभक्तिकार्ये उक्तं रूपं जातम् ।

**अवकटः** ( ई० ४० )—क्रियाविशिष्टसाधनवाचकाद् अवशब्दात 'अवात् कुटारच्च' इति सूत्रेण चकारात् कटच्प्रत्यये विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**अवटीटम्** ( ई० ३६, ४०, ४२, ४७ )—नासिकायाः नतमिति विग्रहे नासिकासाधनके नमने विद्यमानादवशब्दात् 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' इति सूत्रेण टीटच्प्रत्यये विभक्तिकार्यें 'अवटीटम्' इति ।

**नते नासिकायाः** ( ई० ३९ )—नासिकाया नतमित्यर्थे अवटीटम् , अवनाटम् , अवभ्रटम् , इति रूपत्रयम् । उक्तार्थे एव निशब्दात्-निबिडम् , निबिरीसम् , चिकिनम् , चिपिटम् , चिक्कम् , इति पञ्च रूपाणि । तथाहि-अवशब्दात् 'नते-नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटजः' इत्यनेन टीटच् , नाटच् , भ्रटच् , प्रत्यये, ततो यथाक्रमं स्वादिकार्यें अवटीटम् , अवनाटम् , अवभ्रटम् , इति रूपत्रयं सिद्धं भवति । निशब्दात् 'नेर्बिडज्बिरीसचौ' इत्यनेन बिडच् , बिरीसच् प्रत्यये अनुबन्धलोपे स्वादिकार्यें निबिडम् , निबिरीसम् , इति । 'इनच्पिटच्चिकचि च' इत्यनेन इनचि पिटचि प्रत्यये इनचि परे प्रकृतेश्चिकादेशे, पिटचि परे प्रकृते-'चि' आदेशे च कृते अनुबन्धलोपे इनचि परे भसंज्ञायामकारलोपे स्वादिकार्ये-चिकिनम् , चिपिटम् , इति रूपे भवतः । 'कप्रत्ययचिकादेशौ च वक्तव्यौ' इत्यनेन कप्रत्यये चिकादेशे भसंज्ञायाम् , अकारलोपे प्रातिपदिकत्वात्स्वादिकार्यें 'चिक्कम्' इति सिद्धम्भवति । एवञ्च मिलित्वा अष्टौ रूपाणि बोध्यानि ।

**अवभ्रटम्** ( ई० ४५ )—नासिकायाः नतमिति विग्रहे नासिकासाधनके नमने विद्यमानात् अवशब्दात् 'नते नासिकायाः—' इति सूत्रेण भ्रटच्प्रत्यये विभक्तिकार्यें 'अवभ्रटम्' इति ।

**निबिडम्** ( ई० ३९ )—नासिकायाः नतमिति विग्रहे नासिकासाधनके नमने विद्यमानात् निशब्दात् 'नेर्बिडज्बिरीसचौ' इति सूत्रेण बिडच्प्रत्यये विभक्तिकार्यें उक्तं रूपं सिद्धम् ।

**चिपिटम्** ( ई० ४४ )—नासिकायाः नतमित्यर्थे 'इनच्पिटच्चिकचि च' इति सूत्रेण निशब्दात् पिटच्प्रत्यये निशब्दस्य चि इत्यादेशे च कृते विभक्तिकार्यें 'चिपिटम्' इति ।

**चिक्कम्** ( ई० ३८ )—नासिकाया नतमित्यर्थे 'कप्रत्ययचिकादेशौ च वक्तव्यौ' इति वार्तिकेन निशब्दात् कप्रत्यये चिकादेशे च कृते विभक्तिकार्यें 'चिक्कम्' इति रूपं सिद्धम् ।

**तावान्** ( ई० ५३ )—तत्परिमाणमस्येति विग्रहे 'यत्तदेभ्यः परिमाणे वतुप्' इति तद्शब्दात् वतुपि अनुबन्धलोपे 'आसर्वनाम्नः' इत्यात्वे तद्धितान्तत्वात्

सौ 'उगिद्चाम्–' इति नुमि 'अत्वसन्तस्य–' इति दीर्घे 'हल्ङ्याभ्यः–' इति सुलोपे 'संयोन्तस्य लोपः' इति तलोपे 'तावान्' इति।

**कियान्** ( ई० ४३, ४७ )—किं परिमाणमस्येति विग्रहे 'किमिदम्भ्यां वो घः' इति सूत्रेण वतुपि वस्य घादेशे च कृते घस्य इयादेशे 'किम् इयत्' इति स्थिते 'इदङ्किमोरीश्की' इति किमः कीभावे 'यस्येति च' इति ईकारलोपे कियत् शब्दात् सौ 'उगिदचाम्—' इति नुमि अत्वसन्तस्य' इति दीर्घे हल्ङ्यादिसंयोगान्तलोपयोः कृतयोः 'कियान्' इति सिद्धम्।

**इयान्** ( ई० ३८ )—इदं परिमाणमस्येति विग्रहे 'किमिदम्भ्यां वो घः' इति इदम्शब्दात् वतुपि वस्य घादेशे च कृते घकारस्य इयादेशे 'इदम् इयत्' इति स्थिते 'इदङ्किमोरीश्की' इति शित्वादिदमः ईकारे सर्वादेशे 'यस्येति च' इति ईकारस्य लोपे इयत्शब्दात् सो 'उगिदचाम्—'इति नुमि 'अत्वसन्तस्य' इति दीर्घे हल्ङ्यादिति सुलोपे संयोगान्तलोपे 'इयान्' इति।

**त्रयम्–त्रितयम्** ( ई० ५३, ४० )—त्रयोऽवयवा अस्येति विग्रहे 'संख्याया अवयवे तयप्' इति तयपि 'द्वित्रिभ्यां तयप्स्यायज्वा' इति सूत्रेण विभाषया त्रिशब्दात् तयपः अयचि 'यस्येति च' इति इकारलोपे विभक्तिकार्ये 'त्रयम्' इति। अयजोऽभावे 'त्रितयम्' इति।

इति पाञ्चमिकप्रकरणम्।

## अथ मत्वर्थीयप्रकरणम्।

**एकादेशम्** ( ई० ५४ )—एकादश अधिकाः अस्मिन्निति विग्रहे 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति सूत्रेण दशन्शब्दान्तात् समासात् डप्रत्यये टिलोपे विभक्तिकार्ये 'एकादशम्' इति।

**विंशम्** ( ई० ४२ )—विंशतिः अधिकाः अस्मिन्निति विग्रहे 'शदन्तविंशतेश्च' इति सूत्रेण डप्रत्यये 'तिविंशतेर्डिति' इति तिशब्दस्य लोपे विभक्तिकार्ये 'विंशम्' इति।

**सङ्ख्यायाः गुणस्य निमाने मयट्** ( ई० ३६, ४२ )—अत्र गुणो भागः अंश इति। निमीयते क्रियतेऽनेनेति निमानं मूल्यद्रव्यम्। निपूर्वकात् मेङ् प्रणिदाने इत्यस्माद्धातोः करणे ल्युट् 'तदस्य सञ्जातम्' इत्यतो मण्डूकप्लुत्या तद-

स्येत्यनुवर्त्तते। गुणस्येति मध्यमणिन्यायेनोभयान्वयि। तथा च–भागस्य मूल्ये वर्त्तमानाद्गुणगतसङ्ख्यावाचकात्प्रथमान्तात् षष्ठ्यर्थे (अस्येत्यर्थे) मयट् स्यादिति सूत्रार्थः सम्पद्यते। उदाहरणं यथा—द्विमयमुदश्विद्यवानाम्। अत्र यवानां द्वौभागौ निमानमस्योदश्विद्भागस्येति विग्रहो बोध्यः। द्वाभ्यां यवप्रस्थाभ्याम् एक-उदश्वित्प्रस्थः क्रीयते यत्र तत्रेदं वाक्यं प्रयुज्यते शिष्टैः।

**पञ्चमः** (ई० ५५)—पञ्चानां पूरणः इति विग्रहे 'तस्य पूरणे डट्' इति डटि 'नान्तादसंख्यादेर्मट्' इति डटो मडागमे नलोपे विभक्तिकार्ये 'पञ्चमः'।

**षष्ठः** (ई० ४६)—षण्णां पूरणः इति विग्रहे 'तस्य पूरणे डट्' इति डटि 'षट्कतिकतिपयचतुरां थुक्' इति थुकि ष्टुत्वे 'यस्येति च' इत्यकारलोपे विभक्ति-कार्ये 'षष्ठः' इति। अपदान्तत्वात् षस्य न जश्त्वम्।

**कतिपयथः** (ई० ४४, ४५)—कतिपयानां पूरण इति विग्रहे षष्ठ्यन्तात् कतिपयशब्दात् 'तस्य पूरणे डट्' इत्यनेन डट्प्रत्ययेऽनुबन्धलोपे डित्वादभस्यापि टेर्लोपे 'षट्कतिकतिपयचतुरां थुक्' इत्यनेन थुगागमेऽनुबन्धलोपे तद्धितान्तत्वेन प्रातिपदिकत्वात् सौ रुत्वे विसर्गे 'कतिपयथः' इति सिद्धम्। नन्वत्र कतिपयशब्द-स्याऽसङ्ख्यात्वाड्डट् कथं स्यादिति चेत्? सत्यम्, डटि परे थुगागमविधानेनाऽसङ्ख्यात्वेऽपि तत्कल्पनेनाक्षतेः।

**तृतीयः** (ई० ५३)—त्रयाणां पूरणः इति विग्रहे 'त्रेः सम्प्रसारणं च' इति सूत्रेण षष्ठ्यन्तात् त्रिशब्दात् तीयप्रत्यये सम्प्रसारणे च कृते विभक्तिकार्ये 'तृतीयः' इति।

**अच्छावाकीयम्** (ई० ३६)—अच्छावाक्शब्दोऽस्मिन्नस्तीति विग्रहे 'मतौ छः सूक्तसाम्नोः' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकार-लोपे विभक्तिकार्ये 'अच्छावाकीयम्' इति। सूक्तमिति शेषः।

**वारवन्तीयम्** (ई० ३९)—वारवन्तशब्दोऽस्मिन्नस्तीति विग्रहे 'मतौ छः सूक्तसाम्नोः' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'वारवन्तीयम्' इति।

**गर्दभाण्डीयः** (ई० ४५)—गर्दभाण्डशब्दसंयुक्तोऽध्यायोऽनुवाको वाऽस्ति अस्मिन्निति विग्रहे 'मतौ छः सूक्तसाम्नोः' इति सूत्रेण छप्रत्यये 'अध्यायानुवाकयो-र्लुक्' इति तस्य लुकि विभक्तिकार्ये 'गर्दभाण्डः' इति। पक्षे छस्य ईयादेशे अकार-लोपे विभक्तिकार्ये 'गर्दभाण्डीयः' इति।

**वैमुक्तः** ( ई० ४० )—विमुक्तशब्दोऽस्मिन्नस्तीति विग्रहे 'विमुक्तादिभ्योऽण्' इत्यणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'वैमुक्तः' इति सिद्धम् ।

**दैवासुरः** ( ई० ५४ )—देवासुरशब्दोऽस्मिन्नस्तीति विग्रहे 'विमुक्तादिभ्योऽण्' इत्यणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'दैवासुरः' इति जातम् ।

**अभीकः** ( ई० ४७ )—अभिकामयते इति विग्रहे 'अनुकाभिकाभीकः कमिता' इति सूत्रेण कन्प्रत्यये अभेः पाक्षिके दीर्घे च कृते विभक्तिकार्ये 'अभीकः' इति ।

**द्वितीयकम्** ( ई० ३९ )—द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्येति विग्रहे 'तावतिथं ग्रहणमिति लुग्वा' इति सूत्रेण पुरणप्रत्ययान्तात् द्वितीयशब्दात् कन्प्रत्यये पुरणप्रत्ययस्य विभाषया लुकि च कृते विभक्तिकार्ये 'द्विकम्' इति । लुगभावपक्षे 'द्वितीयकम्' इति च ।

**त्वत्काः मत्काः** ( ई० ४२, ४० )—त्वम् एषां मुख्यः इति विग्रहे 'स एषां ग्रामणीः' इति सूत्रेण कन्प्रत्यये 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशे विभक्तिकार्ये 'त्वत्काः' इति । एवम् अहमेषां मुख्यः इति विग्रहे 'मत्काः' इत्यपि बोध्यम् ।

**विषपुष्पकः** ( ई० ४० )—विषपुष्पैर्जनितः इति विग्रहे 'कालप्रयोजनाद्रोगे' इति सूत्रेण कनि विभक्तिकार्ये 'विषपुष्पकः' इति ।

**गुडापूपिकाः** ( ई० ४४ )--गुडापूपाः प्रायेणान्नमस्यामिति विग्रहे 'तदस्मिन्नन्नं प्राये संज्ञायाम्' इति सूत्रेण कनि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**वटकिनी** ( ई० ५६ )--वटकाः प्रायेण अन्नमस्यां पौर्णमास्यामिति विग्रहे 'वटकेभ्यः इनिर्वाच्यः' इति वार्तिकेन इनिप्रत्यये स्त्रीत्वान्ङीपि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**श्रोत्रियः** ( ई० ३८ )—छन्दोऽधीते इति विग्रहे 'श्रोत्रियंश्छन्दोधीते' इति सूत्रेण घन् प्रत्यये निपातनात् प्रकृतेः श्रोत्रादेशे च कृते घस्य इयादेशे 'यस्येति च' इत्याकारलोपे 'श्रोत्रियः' इति ।

**वा इत्यनुवृत्तेश्छान्दसः** ( ई० ५५ )—अयम्भावः, श्रोत्रियंश्छन्दोऽधीते' इति सूत्रे मण्डुकप्लुत्या 'तावतियं ग्रहणमिति लुग्वा' इति सूत्रात् वेत्यनुवर्तते ततश्च घन्प्रत्ययाभावपक्षे छन्दोऽधीते इति विग्रहे 'तदधीते तद्वेद' इति

सूत्रेण अणि 'श्रोत्रियंश्छन्दोऽधीते' इत्यनेन निपातनात् प्रकृतेः श्रोत्रादेशे णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'श्रौत्रः' इति सिद्धं रूपं भवति। वाग्रहणानुवृत्तौ तु घना अध्येत्रणो बाधः स्यादित्यवसेयम्।

**पूर्वी** ( ई० ५४ )—पूर्वं कृतमनेनेति विग्रहे 'पूर्वादिनिः' इति सूत्रेण कृतमित्यादिक्रियाविशेषणात् पूर्वशब्दात् अनेनेत्यर्थे इनि प्रत्यये 'यस्येति च' इत्यकारलोपे प्रातिपदिकसंज्ञायां सौ उपधादीर्घे सुलोपे नलोपे च कृते 'पूर्वी' इति।

**कृतपूर्वी** ( ई० ३७ )—पूर्वं कृतः कृतपूर्वः। कृतपूर्वमनेनेति विग्रहे 'संपूर्वाच्च' इति सूत्रेण इनि प्रत्यये 'यस्येति च' इत्यकारलोपे प्रातिपदिकत्वात् सौ उपधादीर्घे सुलोपे नलोपे 'कृतपूर्वी' इति।

**क्षेत्रियः** ( ई० ४६, ५३ )—परक्षेत्रे चिकित्स्यः ( प्रतीकार्यः ) इति विग्रहे सप्तम्यन्तात् परक्षेत्रशब्दात् चिकित्स्य इत्यर्थे 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' इति सूत्रेण घच्प्रत्यये निपातनात् परशब्दस्य लोपे च कृते घस्य इयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'क्षेत्रियः' इति।

**इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** ( ई० ३७ )—इन्द्रशब्दाद्यथायोगं षष्ठीतृतीयान्तात् लिङ्गमित्याद्यर्थेषु घच् निपात्यत इत्यर्थः। इन्द्रः—आत्मा तस्य लिङ्गमिति विग्रहे घच्प्रत्यये भत्वादलोपे प्रातिपदिकत्वात्स्वादिकार्ये सति इन्द्रियमिति सिद्धम्। चक्षुरादीनीन्द्रियाण्युच्यन्ते। आत्मनोऽनुमापकमितीन्द्रियशब्दस्यार्थः। एवं मम चक्षुरिन्द्रेण दृष्टं = ज्ञातमिति विग्रहे इन्द्रेण सृष्टम्—अदृष्टद्वारा, इन्द्रेण जुष्टं = प्रीणितं सेवितं वा, इन्द्रेण दत्तं = यथायथं विषयेभ्य इति विग्रहे च तृतीयान्तादिन्द्रशब्दाद् घच्प्रत्ययेन इन्द्रियमिति रूढिशब्दोऽयं कथञ्चिद्व्युत्पादितः। सूत्रे इतिशब्दः प्रकारार्थः, तेन इन्द्रेण दुर्जयमिति विग्रहेऽपि 'इन्द्रियम्' इति रूपम्।

**इन्द्रियम्** ( ई० ३६, ४५, ५६ )—'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति सूत्रे इति शब्दः प्रकारार्थः तेन इन्द्रेण दुर्जयमिति विग्रहेऽपि प्रकृतसूत्रेण तृतीयान्तात् इन्द्रशब्दात् घच्प्रत्यये घस्य इयादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'इन्द्रियम्' इति।

**भूमनिन्दा** ( ई० ३७, ३९, ४६, ५५ )—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः॥ इति श्लोकवार्त्तिकम्।

अस्ति विवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु भवन्तीति वाक्यार्थः। एवं 'मत्वर्थे बहुव्रीहिः' इति वार्त्तिकात् भूमादिषु विषये यथायथं बहुव्रीहिरपि बोध्यः। तत्र भूमा = बहुत्वम्। यथा गोमान्, यवमान्। निन्दायां—ककुदावर्तिनी कन्या। प्रशंसायां-रूपवान्। नित्ययोगे—क्षीरिणो वृक्षाः। अतिशायने—उदरिणी कन्या। संसर्गे-दण्डी, क्षत्री। अत्र संसर्गः = संयोगः। तेन संयुक्तदण्ड एव उच्यते, न तु गृहावस्थितदण्डोऽपि। इह दण्डपुरुषयोः संयोगे सत्यपि 'दण्डी पुरुषः' इत्यादिवत् पुरुषीदण्डः पुरुषवान् दण्डः इति प्रयोगो न भवति वृत्तिनियामकस्य संसर्गविशेषरूप-विलक्षणसम्बन्धस्याऽभावात्। संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्यं कल्प्यते।

**विद्युत्वान्** ( ई० ४० )—विद्युद् अस्य अस्मिन्वेति विग्रहे 'तदस्यास्त्य-स्मिन्' इति मतुपि मकाराकारान्तत्वाभावान्मकारोपधत्वाभावाच्च 'मादुपधायाश्च—' इति वत्वाप्राप्त्या 'झयः' इति मतोर्मस्य वत्वे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ 'उगिदचाम्—' इति नुमि सुलोपे संयोगान्तलोपे उक्तं रूपं सिद्धम्।

**आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती** (ई० ३८,५३)—एते षट् संज्ञायां निपात्यन्ते। तत्र आसन्दीभावादिकमेवात्र निपात्यते वत्वं तु 'संज्ञायाम्' इत्यनेनैव सिद्धेः। यथाक्रममुदाहरणानि यथा—'आसन्दीवान्' ग्रामः, अत्र आसनशब्दस्य आसन्दीभावः, अन्यत्र आसनवान् इत्येव। एवम्—'अष्ठीवान्' नाम ऋषिः, अत्र हि अस्थिशब्दस्याष्ठीभावः, अन्यत्र—अस्थिमान्। 'चक्रीवान्' नाम राजा—अत्र चक्रशब्दस्य चक्रीभावः अन्यत्र—'चक्रवान्'। 'कक्षीवान्' नाम ऋषिः—अत्र कक्ष्यायां सम्प्रसारणं निपात्यते अन्यत्र 'कक्ष्यावान्'। रुमण्वान्' नाम पर्वतः—अत्र लवणशब्दस्य रुमणभावो निपात्यते, अन्यत्र—लवणवान्। 'चर्मण्वती' नाम नदी—अत्र चर्मणो नलोपाभावो णत्वं च निपात्यते, अन्यत्र—'चर्मवती' इति भवति।

**चक्रीवान्** ( ई० ३७ )—चक्रमस्ति अस्येति विग्रहे 'आसन्दीवदष्ठीवच्च-क्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती' इति सूत्रेण 'चक्रशब्दस्य निपातनात् चक्रीभावे 'संज्ञायाम्' इति सूत्रेण मस्य वत्वे तद्धितान्तत्वात् सौ उगित्वान्नुमि दीर्घे सुलोपे संयोगान्तलोपे 'चक्रीवान्' इति।

**चर्मण्वती** ( ई० ३८, ४२, ४७ )—चर्म अस्ति अस्येति विग्रहे 'तदस्या-स्त्यस्मिन्—' इति मतुपि 'आसन्दीवदष्ठीवत्—' इति सूत्रेण निपातनात् चर्मणः

नलोपाभावे णत्वे च कृते 'संज्ञायाम्' इति सूत्रेण मतोर्मस्य वत्वे स्त्रीत्वविवक्षायां ङीपि विभक्तिकार्ये 'चर्मण्वती' नाम नदीति सिद्धम् ।

**राजन्वती** ( ई० ३९ )—सौराज्यमस्ति अस्येति विग्रहे राजन् शब्दात् 'राजन्वान्सौराज्ये' इति सूत्रेण मतुपि निपातनान्नलोपाभावे 'मादुपधायाश्च—' इति मस्य वत्वे स्त्रीत्वान्ङीपि विभक्तिकार्ये 'राजन्वती' इति । भूः इति शेषः ।

**चूडालः** ( ई० ४२ )—चूडाऽस्ति अस्येति विग्रहे 'प्राणिस्थादातो लजन्यतरस्याम्' इति सूत्रेण लच्प्रत्यये विभक्तिकार्ये 'चूडालः' इति । पक्षे मतुपि 'चूडावान्' इति भवति ।

**सिध्मलः** ( ई० ५४ )—सिध्मः अस्ति अस्येति विग्रहे 'सिध्मादिभ्यश्च' इति लच्प्रत्यये विभक्तिकार्ये 'सिध्मलः' इति ।

**विषुणः** ( ई० ४४ )—विष्वङ् अस्ति अस्येति विग्रहे 'विष्वङ्ङित्युत्तरपदलोपश्चाकृतसन्धेः' इति वार्तिकेन विषु अञ्च् इत्यस्मात् अकृतसन्धेर्मत्वर्थे नप्रत्यये उत्तरपदलोपे च कृते णत्वे विभक्तिकार्ये 'विषुणः' इति ।

**श्राद्धः** ( ई० ४० )—श्रद्धाऽस्ति अस्येति विग्रहे 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति णप्रत्यये णित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'श्राद्धः' इति ।

**वार्त्तः** ( ई० ४३ )—वृत्तिरस्यास्तीति विग्रहे 'वृत्तेश्च' इति वार्तिकेन मत्वर्थे णप्रत्यये णित्वादादिवृद्धौ 'यस्येति च' इतीकारलोपे विभक्तिकार्ये 'वार्त्तः' इति ।

**तपस्वी** ( ई० ५३ )—तपोऽस्ति अस्येति विग्रहे 'तपःसहस्राभ्यां विनीनी' इति सूत्रेण तपःशब्दात् विनिप्रत्यये तद्धितान्तत्वात् सौ उगित्वान्नुमि दीर्घे सुलोपे नलोपे 'तपस्वी' इति ।

**सिकताः** ( ई० ४०, ४३ )—सिकताः सन्ति अस्मिन्देशे इति विग्रहे 'सिकताशर्कराभ्यां च' इति अणि 'देशे लुबिलचौ च' इति सूत्रेण तस्य लुपि विभक्तिकार्ये 'सिकताः' इति । सिकताशब्दो नित्यं बहुवचनान्तः । तेन सुब्लुपि सति युक्तवद्भावेन विशेष्यस्य देशस्य एकत्वेऽपि बहुवचनमित्यवसेयम् ।

**शर्करेति** ( ई० ३६ )—शर्कराः सन्त्यस्मिन् देशे इति विग्रहे बहुवचनान्तात् शर्कराशब्दात् 'सिकताशर्कराभ्याञ्च' इत्यनेन अण् प्रत्यये, ततः 'देशे लुबिलचौ च' इत्यनेनैव तस्याणो लुपि विभक्तिकार्ये शर्कराः इति । इलचि, अणि, मतुपि च सति शर्करिलः, शार्करः, शर्करावान् इति रूपाणि भवन्ति । तेषाञ्च 'शर्कराया वा'

इत्यनेन विकल्पेन लुपि 'ठक्छौ च' इत्यनेन ठकि शार्करिकम् इति। छप्रत्यये तु शार्करीयम्, इति। कुमुदादौ वराहादौ च पाठसामर्थ्यात्, ठकि शार्करिकम् इति। ककि कृते तु शार्करकम्, इति। तथा च मिलित्वाऽष्टौ रूपाणि।

**मुखरः** ( ई० ४३ )—शब्दं कुर्वन् इत्यर्थे रूढिशब्दोऽयम्। मुखशब्दात 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति वार्तिकेन रप्रत्यये विभक्तिकार्ये 'मुखरः' इति सिद्धम्।

**केशवः** ( ई० ३७, ३९ )—केशः अस्यास्तीति विग्रहे 'केशाद्वोऽन्यतरस्याम्' इति सूत्रेण वप्रत्यये विभक्तिकार्ये 'केशवः' इति। सूत्रे अन्यतरस्यां ग्रहणमिनिठनोः समावेशार्थम्। तेन इनि प्रत्यये सति 'यस्येति च' इति अकारलोपे तद्धितान्तत्वात् सौ दीर्घे सुलोपे नलोपे 'केशी' इति। ठनि कृते तु ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'केशिकः' इति। पक्षे मतुपि तस्य वत्वे च कृते सौ नुमि दीर्घे सुलोपे संयोगान्तलोपे च कृते 'केशवान्' इति।

**अर्णवः** ( ई० ४१ )—अर्णः जलम्, तत्प्रभूतमस्मिन्नस्तीति विग्रहे 'अर्णसो लोपश्च' इति वार्तिकेन अर्णसो वप्रत्यये सकारस्य लोपे च कृते विभक्तिकार्ये 'अर्णवः' इति।

**ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः** ( ई० ३८ )—एते मत्वर्थे निपात्यन्ते। तत्र 'ज्योत्स्ना' इत्यत्र ज्योतिष उपधालोपो नश्च निपात्यते। 'तमिस्रा' इत्यत्र च तमस उपधाया इत्वं रश्च निपात्यते। स्त्रीत्वमत्राविवक्षितम्, तेन 'तमिस्रं' गृहमित्यपि भवति। 'शृङ्गिणः' इत्यत्र शृङ्गादिनच् निपात्यते। 'ऊर्जस्वल' इत्यत्र ऊर्जसो वलच् निपात्यते। ननु 'अस्मायामेधास्रजो विनिः' इत्यनेन विनिप्रत्ययेनैव सिद्धेऽनेन निपातनं व्यर्थमिति चेत्? मैवम्? अस्मायेति सामान्यविहितस्य विनो विशेषविहितेन वचा निवृत्तिर्माभूदित्येतदर्थतन्निपातनस्यावश्यकत्वात्। ऊर्जशब्दाद्वलचि असुगागमे सति रूपं सिद्धमिति वृत्तिग्रन्थं चिन्त्यमेव। ऊर्जस्वतीरित्यत्र बलप्रत्ययाऽभावेन तत्सन्नियोगशिष्टस्य असुगागमस्याऽप्रसक्तेरतोऽसुन्नन्तमेवात्राभ्युपेयम्। 'गोमी' इत्यत्र गोशब्दान्मिनिः निपात्यते। 'मलिनः' इत्यत्र मलशब्दादिनच् प्रत्ययो निपात्यते। अस्मादेव मलशब्दादीमसच्च निपातनात् 'मलीमसः' इत्यपि भवति।

**ज्योत्स्ना** ( ई० ३७ )—ज्योत्स्नावयवा ज्योतींषि, तान्यस्यां सन्तीति विग्रहे ज्योतिष्शब्दात् 'ज्योत्स्नातमिस्रा–' इति सूत्रेण निपातनात् नप्रत्यये उप-

धाभूतस्य इकारस्य लोपे च कृते इणः परत्वाऽभावात् षत्वनिवृत्तौ स्त्रीत्वाट्टापि विभक्तिकार्ये 'ज्योत्स्ना' इति। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः।

**तमिस्रा** ( ई० ४२, ४६ )—तमः अस्यास्तीति विग्रहे 'ज्योत्स्नातमिस्रा–' इति सूत्रेण निपातनात् रक्प्रत्यये उपधाभूतस्य मकाराद्कारस्य इत्वे च कृते स्त्रीत्वाट्टापि विभक्तिकार्ये 'तमिस्रा' इति। 'तमिस्रा तामसी रात्रिः' इत्यमरः।

**ऊर्जस्वलः** ( ई० ४५ )—ऊर्जस् इत्यसुन्नन्तं प्रातिपदिकम्। तस्मात् मत्वर्थे 'ज्योत्स्नातिमिस्रा–' इति सूत्रेण निपातनात् वलचि विभक्तिकार्ये 'ऊर्जस्वलः' इति सिद्धम्।

**विवृद्धौ कर्णौ यस्येति विग्रहे** ( ई० ३८, ४६ )—'कर्णिलः, कर्णी, कर्णिकः, कर्णवान् इति चत्वारि रूपाणि भवन्ति। तद्यथा—वृद्धिविषयात् स्वाङ्गवाचिकर्णशब्दात् 'तुन्दादिभ्य इलच्च' इति सूत्रस्थ 'स्वाङ्गाद्विवृद्धौ' इति गणसूत्रेण इलचि 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'कर्णिलः' इति। इनि पक्षे अलोपे उपधादीर्घे सुलोपे नलोपे च कृते 'कर्णी' इति। ठनि पक्षे ठस्य इकादेशे अलोपे विभक्तिकार्ये 'कर्णिकः' इति मतुपि पक्षे 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतोर्मस्य वत्वे नुमि दीर्घे सुलोपे संयोगान्तलोपे च कृते 'कर्णवान्' इति भवति।

**मायिकः** ( ई० ४४ )—माया अस्ति अस्येति विग्रहे 'अस्मयामेधास्रजो विनिः' इति सूत्रेण विनिप्रत्यये उपधादीर्घे सुलोपे नलोपे 'मायावी' इति। व्रीह्यादिपाठात् 'व्रीह्यादिभ्यश्च' इति सूत्रेग मत्वर्थे इनुप्रत्ययपक्षे 'यस्येति च' इत्यकारलोपे उपधादीर्घे सुलोपे नलोपे 'मायी' इति। ठन्पक्षे ठस्य इकादेशे आकारलोपे विभक्तिकार्ये 'मायिकः' इति।

**हृदयालुः** ( ई० ३८ )—हृदयमस्ति अस्येति विग्रहे 'हृदयाच्चालुरन्यतरस्याम्' इति वार्तिकेन आलुच्प्रत्यये कृते दीर्घे विभक्तिकार्ये 'हृदयालुः' इति। इन्पक्षे अलोपे उपधादीर्घे सुलोपे नलोपे 'हृदयी' इति। ठन्पक्षे ठस्य इकादेशे अलोपे विभक्तिकार्ये 'हृदयिकः' इति। चकारात् मतुपि च कृते मस्य वत्वे उगित्वान्नुमि उपधादीर्घे सुलोपे 'हृदयवान्' इति च सिद्धं रूपं भवति।

**तृप्रालुः** ( ई० ३७ )—तृप्रः पुरोडाशः तं न सहते इत्यर्थे 'शीतोष्णतृप्रेभ्यस्तदसहने' इति वार्तिकेन आलुचि प्रत्यये कृते सवर्णदीर्घे विभक्तिकार्ये 'तृप्रालुः' इति। तृप्रं दुःखमिति माधवः।

**वाचालः-वाचाटः** ( ई० ३६, ३९, ४४, ५६ )—कुत्सितं बहुभाषते इति विग्रहे 'आलजाटचौ बहुभाषिणि' इति सूत्रस्थ 'कुत्सित इति वक्तव्यम्' इति वार्तिकेन वाच्शब्दात् आलच्प्रत्ययपक्षे विभक्तिकार्ये 'वाचालः' इति। आटच्प्रत्यय-पक्षे 'विभक्तिकार्ये' 'वाचाटः' इति। सम्यग्बहु भाषते इति विग्रहे तु 'वाचोग्मिनिः' इति ग्मिनि प्रत्यये कृते विभक्त्यादिकार्ये 'वाग्मी' इत्येवेति न विस्मर्तव्यम्।

**ककुदावर्ती** ( ई० ४० )—ककुदं ग्रीवाया अधस्तात् पृष्ठभागः। तत्र आवर्तः ककुदावर्तः। स अस्यास्तीति विग्रहे गर्ह्यवाचकात ककुदावर्तशब्दात् 'द्वन्द्वोपताप-गर्ह्यात् प्राणिस्थादिनिः' इति सूत्रेण इन्प्रत्यये भत्वादलोपे तद्धितान्तत्वात् सौ उपधा-दीर्घे सुलोपे नलोपे उक्तं रूपं सिद्धम्।

**पञ्चम्युष्ट्रः** ( ई० ५३ )—मासः संवत्सरो वा पञ्चमोऽस्यास्तीति विग्रहे ठनादि बाधयित्वा 'वयसि पूरणात्' इति सूत्रेण इन्प्रत्यये 'यस्येति च' इत्यकार-लोपे उपधादीर्घे सुलोपे नलोपे 'पञ्चमी' इति।

**हस्ती** ( ई० ४३ )—हस्तोऽस्यास्तीति विग्रहे 'हस्ताज्जातौ' इति सूत्रेण इन्प्रत्यये अकारलोपे विभक्त्युत्पत्तौ उपधादीर्घे सुलोपे नलोपे 'हस्ती' इति।

**अर्थवान्** ( ई० ४५ )—असन्निहितः अर्थः अस्येति विग्रहे 'तदस्यास्त्य स्मिन्' इति मतुपि मस्य वत्वे उगित्वान्नुमि सुलोपे संयोगान्तलोपे 'अर्थवान्' इति। असन्निहितः अर्थः अस्येति विग्रहे तु 'अर्थाच्चासन्निहिते' इति वार्तिकेन इन्प्रत्यये अलोपे तद्धितान्तत्वात् सौ उपधादीर्घे सुलोपे नलोपे 'अर्थी' इति।

**कम्बः** ( ई० ३८, ४०, ४३, ५४ )—कमस्त्यस्येति विग्रहे—(१) कम्बः (२) कम्भः (३) कंय्युः (४) कन्तिः (५) कन्तुः (६) कन्तः (७) 'कंय्यः' इति सप्त रूपाणि भवन्ति। तथाहि—प्रथमान्तात् उदकसुखार्थक-मान्त-'कम्'-शब्दात् कंशंभ्यां बभयुस्तितुतयसः' इति सूत्रेण वप्रत्यये—अनुस्वारे परसवर्णे कम्बः। भप्रत्यये अनुस्वारे परसवर्णे-कम्भः। युस्प्रत्यये अनुस्वाराऽनुनासिकादिके—कंय्युः। तिप्रत्यये मस्याऽनुस्वारादिके—कन्तिः। तुप्रत्यये मस्यानुस्वारादिके—कन्तुः। तस्प्रत्ययेऽनुस्वारादिके—कन्तः। यस्प्रत्ययेऽनुस्वारादिके—'कंय्यः' इति।

इति मत्वर्थीयप्रकरणम्।

# अथ प्राग्दिशीयप्रकरणम्

**अमुतः** ( ई० ४०, ४३, ४५ )—अदस्शब्दात् पञ्चम्यन्तात् 'पञ्चम्यास्तसिल्' इति तसिल्प्रत्यये अत्वे पररूपे उत्वे मत्वे च कृते तद्धितान्तत्वात् सौ 'तसिलादय' इति अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'अमुतः' इति ।

**क्व, कुत्र** (ई० ३९,३६) कस्मिन्निति विग्रहे सप्तम्यन्तात् किंशब्दात् 'किमोऽत्' इत्यनेन वैकल्पिके अत् प्रत्यये 'क्वाऽति' इत्यनेन क्वादेशे 'तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ तस्य 'तद्धितश्चाऽसर्वविभक्तिः' इत्यत्र तसिलादीनां परिगणनादव्ययत्वेन लुकि सति क्वेति सिद्धम्। नन्वत्रातस्तकारस्य 'प्राग्दिशो विभक्तिः' इत्यनेन विभक्तित्वात् 'न विभक्तौ' इतीत्संज्ञानिषेधात् इत्वं न स्यादिति चेत्? सत्यम्, 'तवर्गस्येत्वप्रतिषेधोऽतद्धिते' इति वार्तिकेन निषेधात्। अत्प्रत्ययाभावे तु 'सप्तम्यास्त्रल्' इति त्रलि, 'कुतिहोः' इत्यनेन किमः कु आदेशे विभक्तिकार्ये कुत्रेति रूपं बोध्यम्।

**ततो भवन्तम्** ( ई० ५३ )—'इतराभ्योऽपि दृश्यन्ते' इति सूत्रे 'दृशिग्रहणाद्भवद्वादियोग एव' इति वार्तिकोक्तत्वात् 'तं भवन्तम्' इति विग्रहे तत् शब्दात् तसिल्प्रत्यये अत्वे पररूपे अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'ततः' इति सिद्धम्।

**अधुना** ( ई० ४२ )—अस्मिन् काले इत्यर्थे 'अधुना' इति सूत्रेण सप्तम्यन्तात् इदम् शब्दात् अधुनाप्रत्यये 'इदम इश्' इति इशादेशे 'यस्येति च' इति इकारलोपे तद्धितान्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'अधुना' इति ।

**एतर्हि** (ई० ४४)—एतस्मिन् काले इति विग्रहे 'अनद्यतने र्हिलन्यतरस्याम्' इति सूत्रेण सप्तम्यन्तात् एतत् शब्दात् र्हिल्प्रत्यये 'एतदोऽन्' इत्यत्र 'एतदः' इति योगविभागात् रेफादौ एतादेशे तद्धितान्तत्वात्सौ अव्ययत्वात् सुब्लुकि 'एतर्हि' इति ।

**सद्यः परुत्** ( ई० ३९ )—'सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः' इति निपातनार्थकं सूत्रम्। तत्र सद्य इत्यत्र 'समानस्य सभावो द्यश्चाहनि' इति भाष्यवाक्यात् अहर्वृत्तेः सप्तम्यन्तात् समान शब्दात् द्यस्प्रत्ययः समानस्य सभावश्च निपात्यते। पूर्वस्मिन् वत्सरे इति

विग्रहे 'परुत्' इति, पूर्वतरे वत्सरे 'परारि' इति च रूपे भवतः। तत्र 'पूर्वपूर्वतरयोः परादेशः, उदारी च प्रत्ययौ संवत्सरे' इति वार्तिकेन सप्तम्यन्तात्पूर्वपूर्वतरशब्दात् संवत्सरेऽभिधेये उत्, आरिश्च प्रत्यये, प्रकृतेः परादेशे अव्ययत्वाद्विभक्तिलोपे च कृते उक्तरूपसिद्धिः। अस्मिन् संवत्सरे इति विग्रहे सप्तम्यन्तादिदं शब्दात् 'इदम इश् समसण् प्रत्ययश्च संवत्सरे' इति वार्तिकेन इदम इशादेशे समसणि प्रत्यये णित्वादादिवृद्धौ सस्य षत्वे विभक्तिकार्ये 'ऐषमः' इति। परस्मिन्नहनि इति विग्रहे सप्तम्यन्तात् परशब्दात् 'परस्मादेद्यव्यहनि' इति वार्तिकेन इकारान्त-एद्यविप्रत्यये अलोपे विभक्त्यादिकार्ये 'परेद्यवि' इति। अस्मिन्नहनि इति विग्रहे सप्तम्यन्तादिदं शब्दात् 'इदमोऽश्भावो द्यश्च' इति वार्तिकेन अकारान्त-'द्य' प्रत्यये इदम अशादेशे प्रातिपदिकत्वात्सुपः अव्ययपरत्वाल्लुकि कृते 'अद्य' इति रूपं सिद्धम्। पूर्वस्मिन्नहनि, अन्यतरस्मिन्नहनि, इतरस्मिन्नहनि, अपरस्मिन्नहनि, अधरस्मिन्नहनि, उभयस्मिन्नहनि, उत्तरस्मिन्नहनि, इति च विग्रहे पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' इति वार्तिकेन एद्युस् प्रत्यये अकारलोपे प्रातिपदिकत्वात्सोरव्ययपरत्वाल्लुकि सस्य रुत्वे विसर्गे कृते पूर्वेद्युरित्यादि अष्टौ प्रयोगाः निष्पद्यन्ते।

**ऐषमः** ( ई० ४५ )—अस्मिन् संवत्सरे इति विग्रहे 'सद्यः परुत्–' इति सूत्रेण निपातनात् 'इदम इश् समसण् प्रत्ययश्च संवत्सरे' इति भाष्यवार्तिकेन इदमः इशादेशे समसणि प्रत्यये णित्वादादिवृद्धौ इणः परस्य सस्य षत्वे विभक्त्यादि कार्ये 'ऐषमः' इति।

**उभयेद्युः** ( ई० ४०, ४१ )—उभयोरह्नोः इति विग्रहे 'सद्यः परुत्–' इत्यनेन निपातनात् 'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् च' इति भाष्यवार्तिकबलात् उभयशब्दात् एद्युस्प्रत्यये 'यस्येति च' इत्यकारलोपे विभक्त्यादिकार्ये 'उभयेद्युः' इति सिद्धम्।

इति प्राग्दिशीयप्रकरणम्।

# अथ प्राग्वीयप्रकरणम्

**पुरः** ( ई० ३६, ५३ )—पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् इति विग्रहे 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति सूत्रेण अस्तात्यर्थे असि प्रत्यये प्रकृते पुर् इत्यादेशे विभक्त्यादिकार्ये 'पुरः' इति । 'दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इति सूत्रेण अस्ताति प्रत्यये कृते तु 'अस्ताति च' इति सूत्रेण पुरादेशे अव्ययत्वात् सुब्लुकि । 'पुरस्तात्' इति भवति ।

**अधस्तात्** ( ई० ४० )—अधरस्याम्, अधरस्याः अधरा वा दिगित्यर्थे 'पूर्वाधरावराणाम्—' इति सूत्रेण अस्तात्यर्थे असि प्रत्यये प्रकृते अध् इत्यादेशे अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'अधः' इति । 'दिक्छब्देभ्यः–' इत्यनेन अस्तातिप्रत्यये तु 'अस्ताति च' इत्यनेन अस्तातिप्रत्ययपरे प्रकृतेः अध् इत्यादेशे अव्ययत्वात् सुब्लुकि 'अधस्तात्' इति ।

**अवः** ( ई० ५४ )—अवरशब्दात् 'पूर्वाधरावराणाम्–' इति सूत्रेण असि प्रत्यये प्रकृतेः अव् इत्यादेशे अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'अवः' इति सिद्धम् ।

**उपरि** ( ई० ४३ )—'उपर्युपरिष्टात्' इति सूत्रेण अस्तातेर्विषये ऊर्ध्वशब्दस्य उपादेशे रिल्प्रत्यये च कृते अव्ययत्वात् सुब्लुकि 'उपरि' इति । रिष्टातिल्प्रत्यये कृते तु उपरिष्टादिति भवति ।

**दक्षिणात्** ( ई० ४० )—दक्षिणशब्दात् 'उत्तराधरदक्षिणादातिः' इति सूत्रेण आति प्रत्यये अव्ययत्वात् सुब्लुकि 'दक्षिणात्' इति ।

**अपरेण ग्रामम्** ( ई० ४३, ४४, ४५, )—अपरशब्दात् 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्यनेन विकल्पेन एनप्प्रत्यये भसंज्ञायामल्लोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ तस्य लुकि सति 'अपरेण' इति सिद्धम् । ननूक्तसूत्रे 'उत्तराऽधरदक्षिणादातिः' इत्यत उत्तरादयोऽनुवर्त्तन्ते तथासति प्रकृते उत्तराद्यभावात्कथमेनबुक्तप्रयोगे इति चेत् ? सत्यम्, उक्तसूत्रादुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनब्विधानमिति केषाञ्चिन्मतमादायैवोक्तप्रयोगसिद्धिरिति कल्पनेनाऽदोषात् ।

**द्वैतीयीकः**—( ई० ४० )—द्वितीयो भागः इत्यर्थे 'तीयादीकक् स्वार्थे वा वाच्यः' इति वार्तिकेन द्वितीयशब्दात् स्वार्थे ईकक्प्रत्यये कित्वादादिवृद्धौ 'यस्येति

च' इत्यकारलोपे विभक्तिकार्ये 'द्वैतीयकः' इति। पक्षे 'पूरणाद्भागे तीयादन्' इति सूत्रेण अनि अलोपे विभक्तिकार्ये द्वितीयः' इति।

**एकाकी** ( ई० ४० )—असहायवाचकात् एकशब्दात् 'एकादाकिनिच्चासहाये' इति सूत्रेण आकिनिच्प्रत्यये 'यस्येति च' इत्यकारलोपे सौ उपधादीर्घे सुलोपे नलोपे 'एकाकी' इति।

**किमेतिङ्** ( ई० ४२ )—'किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे' इति सूत्रस्वरूपम्। आमु इति छेदः। उकार उच्चारणार्थः। किम्, एत्, तिङ्, अव्यय एषां चतुर्णां द्वन्द्वः। 'किमेत्तिङव्ययप्रकृतिको घः' इति मध्यमपदलोपीसमासः। ततश्च किम एतदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे इत्यर्थो भवति। किन्तमाम्, प्राह्णतमाम् इत्याद्युदाहरणम्।

**पचतितमाम्** ( ई० ५४ )—अतिशयेन पचतीति विग्रहे 'तिङश्च' इति सूत्रेण तमप्प्रत्यये 'तरप्तमपौ घः' इत्यनेन घसंज्ञायाम् 'किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे' इत्यनेन आमुप्रत्यये तद्धितान्तत्वेन प्रातिपदिकात् सौ अव्ययत्वात् सुब्लुकि 'पचतितमाम्' इति। अतिशयिता पाकक्रियेत्यर्थः।

**उच्चैस्तमाम्** ( ई० ३६ )—आशंसतीत्याध्याहार्यम्। अतिशयेन उच्चैराशंसनादिक्रियेत्यर्थः। अत्र 'तिङश्च' इति सूत्रेण तमप्प्रत्यये 'तरप्तमपौ घः' इति घसंज्ञायाम् 'किमेत्तिङ्—' इति आमुप्रत्यये समुदायात् सौ अव्ययत्वात् सुब्लुकि 'उच्चैस्तमाम्' इति।

**लघीयान्** (ई० ४४)—अयमनयोरतिशयेन लघुरिति विग्रहे तमबिष्ठनावपवाद्य 'द्विवचनविभज्योपपदे तरबीयसुनौ' इत्यनेन ईयसुन्प्रत्ययेऽनुबन्धलोपे भसंज्ञायां टिलोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ उगित्वात् 'उगिदचां सर्वनामस्थाने धातोः' इत्यनेन नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इत्यनेन दीर्घे 'हल्ङ्या'दिना सुलोपे संयोगान्तलोपे 'लघीयान्' इति सिद्धम्। नलोपस्तु न भवति संयोगान्तलोपस्यासिद्धत्वात्।

**करिष्ठः** ( ई० ५३ )—अयमनयोरतिशयेन कर्ता इति विग्रहे 'तुश्छन्दसि' इति सूत्रेण तृजन्तात् कर्तृशब्दात् इष्ठन्प्रत्यये 'तुरिष्ठेमेयःसु' इति तृशब्दस्य लोपे विभक्तिकार्ये 'करिष्ठः' इति।

**दोहीयसी** ( ई० ४७ )—अयमनयोरतिशयेन दोग्ध्रीति विग्रहे 'तुश्छन्दसि' इत्यनेन ईयसुन्प्रत्यये 'भस्याऽढे' इति पुंवद्भावे ङीपो निवृत्तौ 'तुरिष्ठेमेयःसु' इत्यनेन तृप्रत्ययस्य लोपे परनिमित्ताऽभावात् 'दादेर्धातोर्घः' इति कृतघत्वस्य निवृत्तौ उगित्वात 'उगितश्च' इत्यनेन ङीप्यनुबन्धलोपे प्रातिपदिकत्वात्सौ तस्य हल्ङ्यादिना लोपे उक्तं रूपं सिद्धम् । 'पुगन्त' इति गुणस्तु न निवर्तते, लुप्तेऽपि तृचि प्रत्ययलक्षणेन तत्सत्वात् ।

**श्रेयान्** ( ई० ४१ )—अयमनयोरतिशयेन प्रशस्यः इति विग्रहे 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति सूत्रेण ईयसुन्प्रत्यये 'प्रशस्यस्य श्रः' इति आदेशे 'श्र ईयस्' इति स्थिते 'यस्येति च' इत्यकारलोपे प्राप्ते 'प्रकृत्यैकाच्' इति प्रकृतिभावे गुणे सौ उगित्वान्नुमि दीर्घे सुलोपे संयोगान्तलोपे च कृते 'श्रेयान्' इति ।

**साधीयान्** ( ई० ४० )—अयमनयोरतिशयेन बाढः (भृशः) इति विग्रहे 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति सूत्रेण ईयसुन्प्रत्यये 'अन्तिकबाढयोर्नेदसाधौ' इति साधादेशे 'यस्येति च' इत्यकारलोपे सौ उगित्वान्नुमि 'अत्वसन्तस्य–' इति दीर्घे सुलोपे संयोगान्तलोपे 'साधीयान्' इति ।

**क्षोदिष्ठः** ( ई० ४२,४४ )—अयमनयोरतिशयेन क्षुद्रः इति विग्रहे 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यये 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति सूत्रेण रेफस्य लोपे उकारस्य गुणे च कृते 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'क्षोदिष्ठः' इति ।

**'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवबंहिगर्वर्षित्रब्द्राघिवृन्दाः'** ( ई० ३८ )—प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु परेष्विति सूत्रार्थः । यथाक्रममुदाहरणानि यथा—प्रेष्ठः इति । प्रियशब्दादिष्ठनि प्रकृतेः प्रादेशः आभीयत्वेनासिद्धत्वादकारोच्चारणसामर्थ्याच्च टिलोपो न । स्थेष्ठः इति । स्थिरशब्दादिष्ठनि प्रकृतेः स्थादेशः, प्रकृतिभावाट्टिलोपाभावः । स्फेष्ठः इति । स्फिरशब्दादिष्ठनि प्रकृतेः स्फादेशः, गुणादिके सति रूपम् । वरिष्ठः इति । उरुशब्दादिष्ठनि प्रकृतेर्वरादेशः । बंहिष्ठः इति । बहुलशब्दस्य बंहि इत्यादेशः ( इकार उच्चारणार्थः ) । गरिष्ठः इति । गुरुशब्दादिष्ठनि प्रकृतेर्गरादेशः । वर्षिष्ठः इति । वृद्धशब्दादिष्ठनि प्रकृते वर्षिरादेशः । अत्रापीकारो बंहिवदुच्चारणार्थः । त्रपिष्ठः इति । तृप्रशब्दादिष्ठनि प्रकृतेरदुपधत्रपादेशः । द्राघिष्ठः इति । दीर्घशब्दादिष्ठनि प्रकृते-

द्राघिरादेशः। इकारस्यात्राप्युच्चारणार्थत्वमेवाभ्युपेयम्। वृन्दिष्ठः इति। वृन्दारक-शब्दादिष्ठनि प्रकृतेर्वृन्दादेशः। अकारोह्युच्चारणार्थः। एवं प्रियादिशब्दादीयसुनि प्रकृतेः प्राद्यादेशे 'प्रेयान्, स्थेयान्, स्फेयान् बरीयान्, बंहीयान्, गरीयान्, वर्षीयान्, त्रपीयान्, द्राघीयान्, वृन्दीयान्,। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादि-त्वादिमनिचि, प्रेमा, वरिमा, बंहिमा, गरिमा, द्राघिमा इति रूपाणि भवन्ति।

**बंहिष्ठः** ( ई० ४३ )—अयमनयोरतिशयेन बहुलः इति विग्रहे 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यये 'प्रियस्थिर—' इति सूत्रेण बहुलशब्दस्य बंहि इत्यादेशे इकारस्योच्चारणार्थकत्वेन दर्शनाभावे विभक्तिकार्ये 'बंहिष्ठः' इति। बंहेरिकारस्यो-च्चारणार्थकत्वाभावे तु आभीयत्वेन असिद्धत्वात् उच्चारणसामर्थ्याद्वा 'यस्येति च' इति इकारस्य लोपो न स्यात्।

**गरिष्ठः** ( ई० ४० )—अयमनयोरतिशयेन गुरुः इति विग्रहे 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यये 'प्रियस्थिर–' इति गुरुशब्दस्य गर् इत्यादेशे विभक्ति-कार्ये 'गरिष्ठः' इति।

**भूयान्** ( ई० ४७,५६ )—अयमनयोरतिशयेन बहुरिति विग्रहे 'द्विवचन-विभज्योपपदे तरबीयसुनौ' इति सूत्रेण ईयसुनि 'बहोर्लोपो भू च बहोः' इत्यनेन ईयसुनः ईकारलोपे बहोश्च भूरादेशे सौ उगित्वान्नुमि 'सान्तमहतः–' इति दीर्घे सुलोपे संयोगान्तलोपे 'भूयान्' इति।

**स्रजिष्ठः** ( ई० ५४ )—अयमनयोरतिशयेन स्रग्वीति विग्रहे 'अतिशायने तमबिष्ठनौ' इति स्रग्विन् शब्दात् इष्ठनि 'विन्मतोर्लुक्' इति विनो लुकि तन्निमित्त-पदत्वभङ्गात् कुत्वनिवृत्तौ विभक्तिकार्ये 'स्रजिष्ठः' इति।

**बहुपटुः** ( ई० ४७ )—ईषदूनः पटुः इति विग्रहे 'विभाषा सुपो बहुच्पुर-स्तात्तु' इति सूत्रेण पटुशब्दात् सुबन्तात् प्राक् बहुचि कृते प्रातिपदिकावयवात् सुपो लुकि समुदायात् सुबुत्पत्तौ रुत्वे विसर्गे 'बहुपटुः' इति।

**शूद्रकः** ( ई० ४४ )—कुत्सितः शूद्रः इति विग्रहे 'संज्ञायां कन्' इति सूत्रेण कनि विभक्तिकार्ये 'शूद्रकः' इति।

**धानकाः** ( ई० ३६ )—'नीतौ च तद्युक्तात्' इति सूत्रेण धानाशब्दात् कप्रत्यये 'केऽणः' इति ह्रस्वे स्त्रीत्वे टापि 'अभाषितपुंस्काच्च' इत्यस्य वैकल्पिकत्वेन इत्वाभावे स्वादिकार्ये 'धानकाः' इति। हन्त ते धानकाः' दास्यन्त इति शेषः।

हन्तेत्यव्ययमनुकम्पाद्योतकम् । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमरात् । ततश्च अनुकम्पायुक्ता धाना इत्यर्थो भवतीत्यवसेयम् ।

**अद्धकि** ( ई० ३६ )—'नीतौ च तद्युक्तात्' इति सूत्रे 'अव्ययसर्वनाम्नां टेः प्रागकच्' इति चानुवर्तते । 'अव्ययसर्वनाम्नाम्' इत्यत्र च 'तिङश्च' इत्यनुवृत्तेः अदीति तिङन्तस्य टेः प्रागकचि विभक्तिकार्ये 'अद्धकि' इति सिद्धम् ।

**देविलः** ( ई० ४०, ५३ )—अनुकम्पितो देवदत्त इति विग्रहे—देविकः, देवियः, देविलः, देवदत्तकः, इति चत्वारि रूपाणि भवन्ति । तथाहि—प्रथमान्ताद्देवदत्तशब्दात् 'बह्वचो मनुष्यनाम्नष्ठज्वा' इति सूत्रेण विकल्पेन ठच्प्रत्यये 'ठाऽजादावूर्ध्वं द्वितीयादचः' इति सूत्रेण द्वितीयादचः परस्य दत्तशब्दस्य लोपे ठस्येकादेशे भसंज्ञायामल्लोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'देविकः' इति सिद्धम् । 'घनिलचौ च' इति सूत्रेण विकल्पेन घनि पूर्ववदेव द्वितीयादच ऊर्ध्वं लोपादिके घस्येयादेशे विभक्तिकार्ये 'देवियः' इति रूपम् । इलच्यपि पूर्ववदेव लोपादिकार्ये सति 'देविलः' इति च रूपम् । पक्षे तु—'अनुकम्पायाम्' इत्यनेन कनि कृते 'देवदत्तकः' इति रूपम् भवति ।

**सत्या** ( ई० ५६ )—अत्र 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः' इति वार्तिकेन उत्तरपदस्य भामाशब्दस्य लोपे विभक्त्यादिकार्ये 'सत्या' इति ।

**चतुर्थादनजादौ वा लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च** ( ई० ३८,४७,५४ )—अस्यार्थस्तु—चतुर्थादयः ऊर्ध्वस्य लोपः, अनजादौ च विभाषालोपः, पूर्वपदस्य च विभाषालोपः, अप्रत्यये विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपः, तथा उवर्णात्परस्य इलचो लोपः चकारेण ठाजादौ द्वितीयादच ऊर्ध्वं लोपः स्यादित्यर्थः । तदुदाहरणानि यथा—अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः अस्मिन्नेव विग्रहे अनुकम्पितो देवदत्तः—देवदत्तकः, देवकः दत्तिकः, दत्तियः, दत्तिलः, दत्तकः, देवदत्तः, दत्तः, देवः, एवं सत्यभामा, भामा, सत्या । भानुदत्तः, भानुलः इत्यादि ।

**अनुकम्पितः** ( ई० ३७, ४३, ४६ )—अनुकम्पित उपेन्द्रदत्त इति विग्रहे प्रथमान्तादुपेन्द्रदत्तशब्दात् 'प्राचामुपादेरडज्वुचौ च' इत्यनेन अडच्, तथा वुच्प्रत्यये अनुबन्धलोपे 'ठाऽजादावूर्ध्वं द्वितीयादचः परस्येकारादेर्लोपे 'युवोरनाकौ' इत्यनेनाकादेशे अल्लोपे प्रातिपदिकत्वात्स्वादिकार्ये 'उपडः उपकः' इति रूपे । न च

गुणे कृते द्वितीयादच ऊर्ध्वस्य जायमानो लोपो नकारादेः स्यादिति वाच्यम् , 'नेन्द्रस्य परस्य' इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षयाऽन्तरङ्गस्याऽप्येसादेशस्य पूर्वमप्रवृत्या इकारादेरेव लोपविधानेनाक्षतेः । अस्मादेव घनि, घस्येयादेशेऽल्लोपे स्वादिकार्ये 'उपियः', इलचि—उपिलः, ठचि—उपिकः, कप्रत्यये—उपेन्द्रदत्तकः इकि षड् रूपाणि भवन्ति ।

**रासभकः** ( ई० ४४ )—रासभशब्दात् 'जातिनाम्नः कन्' इति सूत्रेण कनि विभक्तिकार्ये 'रासभकः' इति ।

**वाचिकः** ( ई० ४४ )—वाचा आशीः वागाशीः । वागाशिषा दत्तः इति विग्रहे 'बह्वचो मनुष्यनाम्नष्ठज्वा' इति सूत्रेण ठचि 'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः' इति वार्तिकेन वागित्येकाक्षरपूर्वपदात्परयोराशिर्दत्तशब्दयोर्लोपे ठस्य इकादेशे विभक्तिकार्ये 'वाचिकः' इति । लोपे कृते कुत्वादिकं तु न भत्वेन पदत्वबाधात् ।

**षषष्ठाजादिवचनात्सिद्धमिति** ( ३७, ३९, ४२, ४५ )—इदञ्च कथं षडङ्गुलिदत्तः 'षडिकः' इत्याशङ्कायां कौमुद्यामुत्तरम् । अयमाशयः–यथा 'वाचिकः' इत्यत्र वागाशीर्दत्त इति विग्रहे 'बह्वचो मनुष्यनाम्नष्ठज्वा' इत्यनेन ठचि उत्तरपदस्य लोपे ठस्येकादेशे इक्प्रत्ययाश्रितभत्वेन पदत्वाभावात्कुत्वं जश्त्वञ्च न भवति तथैव षडङ्गुलिदत्तः षडिक इत्यत्रापि उत्तरपदस्य लोपे सति इक्प्रत्ययाश्रितभत्वेन पदत्वाऽभावाज्जश्त्वं न स्यादिति तत्रोत्तरमाह—षषष्ठाजादीत्यादि । 'ठाजादावूर्ध्वं द्वितीयादचः' इति सूत्रेण षष्शब्दस्य पूर्वपदत्वे द्वितीयादच ऊर्ध्वस्यैव लोपो न त्वयमुत्तरपदलोप इति वचनात् 'षडिक' इति सिद्धमित्यर्थः । तथा च उक्तप्रयोगे ङकारादूर्ध्वस्य लोपे सति ङकाराऽकारस्य भत्वात् 'यस्येति च' इति लोपे सति तस्य स्थानिवद्भावेन अकारान्तस्य इकमाश्रित्य भत्वे सति तेन अकारान्तनिष्ठेन षकारान्तस्य पदत्वाऽव्याघाताज्जश्त्वाभावे बाधकाभाव इति । उक्तञ्च 'स्वादिष्व सर्वनामस्थाने' इति सूत्रभाष्ये—'अकारान्तमेतत् भसंज्ञाम्प्रति पदसंज्ञाम्प्रति षकारान्तम्' इति ।

**वृक्षकः** ( ई० ५५ )—ह्रस्वो वृक्षो वृक्षकः । अत्र 'ह्रस्वे' इति सूत्रेण कनि विभक्तिकार्ये 'वृक्षकः' इति ।

**कतमः** ( ई० ५४ )—बहूनां मध्ये एकस्य निर्धारणेऽर्थे किम्शब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति सूत्रेण डतमच्प्रत्यये डित्त्वसामर्थ्यात् टेर्लोपे

विभक्तिकार्ये 'कतमः' इति 'कतमो भवतां कठः' इत्यत्र 'गोत्रं च चरणैः सह' इति कठस्य जातित्वम् ।

**यतमः, ततमः** ( ई० ४३, ३९ )—उभयत्र बहूनां मध्ये एकस्य निर्धारणेऽर्थे 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति सूत्रेण यत् शब्दात् , तत् शब्दात् डतमच्प्रत्यये डित्वाट्टिलोपे विभक्तिकार्ये यतमः, ततमः, इति रूपद्वयं सिद्धं भवति । विकल्पपक्षे 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकचि यकः, इति । 'तदोः सः–' इति सत्त्वे च कृते 'सकः' इति भवति । महाविभाषया यः, सः इत्यपि रूपे भवतः ।

इति प्राग्वीयप्रकरणम् ।



## अथ स्वार्थिकप्रकरणम् ।

**वासुदेवः** ( ई० ४१ )—वासुदेवतुल्या जीविकार्था अविक्रेया प्रकृतिरित्यर्थः । अत्र 'संज्ञायां च' इति सूत्रेण कनि 'जीविकार्थे चापण्ये' इति तस्य लुपि विभक्तिकार्ये 'वासुदेवः' इति ।

**मुख्यः** ( ई० ५४ )—मुख इव मुख्यः । मुखशब्दात् 'शाखादिभ्यो यः' इति यप्रत्यये 'यस्येति च' इति अकारलोपे विभक्तिकार्ये 'मुख्यः' इति ।

**काकतालीयः** ( ई० ४२, ४४, ५३ )—काकतालमिव काकतालीयः । अत्र 'समासाच्च तद्विषयात्' इति सूत्रेण छप्रत्यये छस्य ईयादेशे 'यस्येति च' इति अकारलोपे 'काकतालीयः' इति । कश्चित् काकः अकस्मात् तालवृक्षस्य मूलं गतस्तत्र तालपतनान्मृतः । तथैव कश्चित् देवदत्तः अकस्मात् निर्जनप्रदेशे क्वचिद् गतस्तत्र चौरेण हतः । तत्र 'काकतालीयो देवदत्तस्य वधः' इति वाक्यं प्रवृत्तम् ।

**आङ्गुलिकः** ( ई० ५५ )—अङ्गुलीव आङ्गुलिकः । अत्र 'अङ्गुल्यादिभ्यष्ठक्' इति ठकि कित्वादादिवृद्धौ ठस्य इकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आङ्गुलिकः' इति ।

**एकशालिकः** ( ई० ४६ )—एकशालेवेति विग्रहे 'एकशालायाष्ठजन्यतरस्याम्' इति ठच्प्रत्यये ठस्य इकादेशे 'यस्येति च' इति आकारलोपे विभक्तिकार्ये

'एकशालिकः' इति। पक्षे 'अङ्गुल्यादिभ्यष्ठक्' इति ठकि कित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'ऐकशालिकः' इति।

**लौहितध्वज्यः** ( ई० ४५ )—लोहिताः ध्वजाः यस्य पूगस्य स लोहितध्वजः, स एव लौहितध्वज्यः। अत्र—'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इति सूत्रेण ञ्यप्रत्यये ञित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे विभक्तिकार्ये 'लौहितध्वज्यः' इति सिद्धम्।

**आयुधजीवः** ( ई० ४३ )—'आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्' अत्र सूत्रे आयुधजीविसङ्घात्, ञ्यट्, वाहीकेषु, अब्राह्मणराजन्यात्' इति पदच्छेदः।

**क्षौद्रकी** ( ई० ३६ )—क्षुद्रको नाम कश्चिदायुधजीविनां बाह्लीकदेशवासिनां सङ्घः स एव पुमांश्चेति क्षौद्रक्यः, स्त्री चेत् क्षौद्रकी। तथा च स्त्रीत्वविवक्षायां क्षुद्रकाशब्दात् 'आयुधिजीविसङ्घाञ्ञ्यड् बाह्लीकेष्वब्राह्मणराजन्यात्' इत्यनेन स्वार्थे ञ्यट्प्रत्यये ञित्वादादिवृद्धौ 'यस्येति च' इत्याकारलोपे टिदन्तत्वात् ङीषि भसंज्ञायामकारलोपे 'हलस्तद्धितस्य' इत्यनेनोपधाभूतस्य यकारस्य लोपे 'क्षौद्रकी' इति सिद्धम्। ननु कृतेऽकारलोपे कथमुपधात्वमिति चेत्! यलोपे कर्त्तव्येऽल्लोपस्याभायत्वेनासिद्धतया यकारस्योपधात्वसम्भवात्। नचाल्लोपस्य स्थानिवत्वं शङ्क्यम्, यलोपविधौ तन्निषेधात्। नचैवमपि 'आयुधिजीवि' इति सूत्रे 'व्रातचफञोरस्त्रियाम्' इत्यतोऽस्त्रियामित्यनुवृत्तौ स्त्रियां ञ्यट् प्रत्ययाभावेनोक्तरूपं न सिद्ध्येदिति वाच्यम्, टित्वसामर्थ्यादत्रास्त्रियामिति न सम्बध्यत इत्यभ्युपगमादिष्टसिद्धेः।

**'दामन्यादित्रिगर्तषष्ठाच्छः'** ( ई० ३९ )—दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्य-आयुधजीविसङ्घवाचिभ्यः स्वार्थे छप्रत्ययो भवतीत्यर्थः। तत्र त्रिगर्तषष्ठाः के इति जिज्ञासायां सङ्कलय्याह मूले—

'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी।
क्रौष्टुकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जालकिः॥'

कौण्डोपरथः, दाण्डकिः, क्रौष्टुकिः, जालमानिः, ब्राह्मगुप्तः, जालकिरित्येतान् त्रिगर्तषष्ठान् आहुरित्यर्थः। एतेषु षट्सु कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ, शेष इञन्तः। तथा च एभ्यः छप्रत्यये भसंज्ञायामकारादिलोपे छस्येयादेशे प्रातिपदिकत्वात्स्वादिकार्ये–कौण्डोपरथीयः, दाण्डकीयः, क्रौष्टुकीयः, जालमानीयः, ब्राह्मगुप्तीयः, जालकीयः, इति षट्प्रयोगाः निष्पद्यन्ते।

**आभिजित्यः** (ई० ४७)—अभिजितोऽपत्यमाभिजितः स एव आभिजित्यः । अत्र 'अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्' इति सूत्रेण यञि ञित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'आभिजित्यः' इति ।

**शालावत्यः** ( ई० ४४ )—शालावतोऽपत्यं शालावतः, स एव शालावत्यः । 'अभिजिद्–' इति सूत्रेणात्र स्वार्थे यञ्प्रत्यये ञित्वादादिवृद्धौ भत्वादल्लोपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**शामीवत्यः** ( ई० ४१ )—शामीवतोऽपत्यं शामीवतः, स एव शामीवत्यः । अत्र 'अभिजिद्–' इति सूत्रेण स्वार्थे यञि पर्यन्यत्रल्लक्षणया आदिवृद्धौ भत्वादल्लोपे विभक्तिकार्ये 'शामीवत्यः' इति ।

**कपोतपाकाः** ( ई० ४५ )—कपोतान् = पक्षिविशेषान् पचतीति विग्रहे चञि सति कपोतपाकः, स एवेति विग्रहे 'व्रातच्फञोरस्त्रियाम्' इत्यनेन ञ्यप्रत्ययेऽनुबन्धलोपे सुब्लोपे 'ञ्यादयस्तद्राजाः' इत्यनेन तद्राजसंज्ञायान्ततः 'तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्' इत्यनेन प्रत्ययस्य लुकि तद्धितान्तत्वेन प्रातिपदिकत्वाज्जसि पूर्वं सवर्णदीर्घादिके कृते 'कपोतपाकाः' इति सिद्धम् ।

**द्विपदिकाम्** ( ई० ४३, ४६ )—द्वौ द्वौ पादौ ददातीति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन समासे सुब्लुकि द्विपाच्छब्दात् 'पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च' इत्यनेन वुन् प्रत्यये प्रकृतेरन्त्यस्य लोपे चानुबन्धलोपे "युवोरनाकौ' इत्यनेन वोरकादेशे 'पादः पत्' इत्यनेन पादः पद्भावे वुनः स्वभावात्स्त्रीत्वेन टापि सवर्णदीर्घे 'प्रत्ययस्थात्कात्पूर्वस्येदाप्यसुपः' इत्यनेन इत्वे सारमि पूर्वरूपे सति 'द्विपदिकाम्' इति सिद्धम् । न च वुनोऽकादेशे सति यस्येति चेत्यनेनैव लोपसिद्धेरिह लोपविधानं व्यर्थमिति वाच्यम्, तल्लोपस्य परनिमित्तकतया तस्य 'अचः परस्मिन्निति' स्थानिवत्वात् 'पादः पत्' इति पद्भावाभावापत्तेः । सति त्वनेन लोपे परनिमित्तकत्वाभावेन स्थानिवत्वाभावाक्षतेः ।

**अणुकः** ( ई० ४१ )—अणुरेव अणुकः । अणुशब्दात् 'स्थूलादिभ्यः प्रकारवचने कन्' इति कन्प्रत्यये विभक्तिकार्ये 'अणुकः' इति ।

**सामिकृतम्** ( ई० ३९, ४१, ५३ )—अत्र अनत्यन्तगतौ गम्यमानायां क्तान्तात् 'अनत्यन्तगतौ क्तात्' इत्यनेन कनि प्राप्तौ 'न सामिवचने' इत्यनेन तन्निषिध्यते । ननु समुदायस्य क्तान्तत्वं कथमिति चेत् ? सामीत्यस्य क्रियाविशेषण-

त्वेन कारकत्वात् समुदायस्य क्तान्तत्वं, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । न चेह अनत्यन्तगतेः प्रकृत्यैवोक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन पूर्वसूत्रविहितस्य कनोऽप्राप्तौ तन्निषेधो व्यर्थ एवेति वाच्यम् , अस्मादेव निषेधात् अत्यन्तस्वार्थिकोऽपि कन् भवतीति ज्ञापनेनादोषात् । अन्यथैतद्वैयर्थ्यस्य वारयितुमशक्यत्वात् । एवञ्चात्यन्तस्वार्थिकस्याऽपि कनो निषेधात् । प्राप्तस्य निषेधासम्भवेन अत्यन्तस्वार्थिका अपि कनः 'सन्तीति विज्ञायते । तेन बहुतरमेव 'बहुतरकम्' इत्यादि सिद्धम् ।

**आशितङ्गवीनम्** ( ई० ४२, ४५, ४७ )—आशिता गावोऽस्मिन्निति विग्रहे 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः' इत्यनेन खप्रत्यये निपातनात्पूर्वस्य मुमि सुब्लोपे खस्य 'आयनेयी'त्यादिना ईनादेशे 'ओर्गुणः' इत्यनेन गुणेऽवादेशे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ तस्यामाद्यादेशे कृते 'आशितङ्गवीनम्' इति सिद्धम् । अरण्यमित्यर्थः ।

**अर्वाक्, अर्वाचीनम्** ( ई० ५४,४४ )—अर्वन्तमञ्चतीति विग्रहे 'अर्वाक्' । ततः स्वार्थे 'विभाषाऽञ्चेरदिक्स्त्रियाम्' इति सूत्रेण खप्रत्यये खस्य ईनादेशे प्रातिपदिकत्वेन स्वभावात् सामान्ये नपुंसकमेकवचनान्तत्वं च तस्यामादेशे पूर्वरूपे 'अर्वाचीनम्' इति ।

**आनुगादिकः** ( ई० ५६ )—अनुगदतीत्यनुगादी । स एव आनुगादिकः । 'अनुगादिनष्ठक्' इति स्वार्थे ठकि कित्वादादिवृद्धौ 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये 'आनुगादिकः' इति ।

**चतुः** ( ई० ४१ )—भुङ्क्ते इत्यनुषज्यते । चतुर्शब्दात् 'द्वित्रिचतुर्भ्यः सुच्' इति सुचि 'चतुर् स्' इति स्थिते 'रात्सस्य' इति सकारस्य लोपे सुलोपे रेफस्य विसर्गे 'चतुः' इति ।

**बहुधा** (ई० ३६, ३९, ४०)—आसन्नकालिकक्रियाजन्मगणनवृत्तेर्बहुशब्दात् 'विभाषा बहोर्धाऽविप्रकृष्टकाले' इति सूत्रेण धाप्रत्यये अव्ययत्वात् सुब्लुकि 'बहुधा' इति । पक्षे तु 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच्प्रत्यये कृते बहुकृत्वः' इति भवति । 'बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते' दिवसे प्रातः सङ्गवाद्यव्यवहितकालिकोत्पत्तिविशिष्टा भोजनक्रियेत्यर्थः ।

**तत्प्रकृतिवचने मयट्** ( ई० ४३, ५३ )—तदिति प्रथमान्तनिर्देशः प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं प्रतिपादनं बोधनमिति यावत् । अत्र वचनमिति

भावेऽधिकरणे वा ल्युट्। तथा च प्रकृतस्य बोधने सति प्राचुर्यविशेषणकवस्तुवृत्तेः प्रथमान्तात्स्वार्थे मयट् प्रत्ययः स्यादित्यर्थः। तत्र भावल्युट्पक्षे-प्रकृतमन्नमिति विग्रहे-अन्नमयम्। अत्र अद्यत इत्यन्नमिति भावे ल्युट्, तस्य प्राचुर्ये मयटि सति उक्तं रूपं सिद्ध्यति। स्वार्थिकत्वात्प्रकृतिलिङ्गता। अधिकरणल्युट् पक्षे—अन्नमयो यज्ञः। अस्वार्थिकत्वेन प्रकृतिलिङ्गत्वाभावाद्विशेष्यनिघ्नता। 'इष्टिषु दशौदनाः पशौ तं सोम सहस्र'मित्यादिवाक्यैरुच्यमानानि प्राचुर्यविशिष्टान्यन्नानीत्युक्तोदाहरणस्यार्थः।

**मौदकिकम्** ( ई० ४५ )—मोदकाः प्रकृता इति विग्रहे 'समूहवच्च बहुषु' इति सूत्रेण सामूहिकप्रत्ययातिदेशे 'अचित्तहस्तिधेनोष्ठक्' इत्यनेन ठक्प्रत्यये केत्वादादिवृद्धौ ठस्य ईकादेशे 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये 'मौदकिकम्' इति सिद्धम्।

**पाद्यम्** ( ई० ३९ )—पादार्थमुदकं पाद्यम्। 'पादार्घाभ्यां च' इति सूत्रेणात्र यत्प्रत्यये अलोपे विभक्तिकार्ये 'पाद्यम्' इति।

**मणिकः** ( ई० ५४ )—मणिरेव मणिकः। 'यवादिभ्यः कन्' इति सूत्रेणात्र कनि विभक्तिकार्ये 'मणिकः' इति।

**लोहितकः** ( ई० ५५ )—लोहित एव लोहितकः। 'लोहितान्मणौ' इति सूत्रेणात्र स्वार्थे कनि विभक्तिकार्ये 'लोहितकः' इति।

**लोहिनिका** ( ई० ४५ )—लोहितशब्दात्स्त्रीत्वविवक्षायां 'वर्णादनुदात्तात्तोपधातो नः' इत्यनेन नत्वसन्नियोगशिष्टे ङीपि ततः 'वर्णे चाऽनित्ये' इत्यनेन कन्प्रत्ययेऽनुबन्धलोपे 'केऽणः' इति ह्रस्वे 'अजाद्यतष्टाप्' इत्यनेन टापि सवर्णदीर्घे ङ्याबन्तात्प्रातिपदिकात्सौ तस्य हल्ङ्यादिना लोपे सति 'लोहिनिका' इति सिद्धम्। ननु स्वार्थिकप्रत्ययानां परत्वादन्तरङ्गत्वाच्च नत्वसन्नियोगशिष्टं ङीपं बाधित्वा कनि सति लोहितक-शब्दात् टापि 'प्रत्ययस्था'दितीत्वे 'लोहितिका' इत्येव रूपं स्यान्न तु लोहिनिकेति चेत्? सत्यम्, 'लोहितालिङ्गबाधनं वा' इत्यनेन स्त्रीलिङ्गबोधकप्रत्ययस्य विकल्पेन कना बाधादुभयरूपस्य निर्बाधात्। न च 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङ्याब्ग्रहणेन ङ्याबन्तात्तद्धितोत्पत्तिर्भवति न तु ततः प्राक्, एवञ्च ङीपः पूर्वं कनः प्राप्तिरेव नेति वार्त्तिकमिदं व्यर्थमिति वाच्यम्, अस्मादेव लिङ्गात्स्वार्थिकतद्धितेषु ङ्याब्ग्रहणस्याऽसम्बद्धत्वाऽवगमात्। नन्वेवमपि 'सुबन्तात्तद्धि-

-तोत्प.त्तरिति' सिद्धान्तात् 'कुत्सिते' इति सूत्रस्थभाष्याऽनुसारेण स्वार्थद्रव्यलिङ्ग-संख्याकारककुत्सादिप्रयुक्तकार्याणां क्रमिकतया ङ्याबन्तादेव सुपि ततः कनि लोहि-निकेति रूपसिद्धेर्वचनमिदं व्यर्थमेवेति वाच्यम् , अत एव स्वार्थिकप्रत्ययानां प्राति-पदिकादेव प्रवृत्त्यवगमादिति दिक् ।

**औपयिकः** ( ई० ३७ )—उपाय एव औपयिकः । उपायशब्दात् 'उपायाद्-ध्रस्वत्वं च' इति वार्तिकेन स्वार्थे ठकि प्रकृते दीर्घस्य ह्रस्वे च कृते कित्वादादिवृद्धौ विभक्तिकार्ये 'औपयिकः' इति ।

**वाचिकम्** ( ई० ४३ )—वाच्शब्दात् 'वाचो व्याहृतार्थायाम्' इति सूत्रेण स्वार्थे ठकि ठस्य ईकादेशे पर्यन्यवल्लक्षणया कित्वादादिवृद्धौ विभक्तिकार्ये 'वाचिकम्' इति । 'सन्देशवाग्वाचिकं स्यादि'त्यमरः ।

**मृत्स्ना** ( ५४, ५५ )—प्रशस्ता मृत् मृत्स्ना । अत्र 'सस्नौ प्रशंसायाम्' इति सूत्रेण प्रशस्तायां मृदि वर्तमानात् मृच्छब्दात् स्वार्थे स्नप्रत्यये स्त्रीत्वाट्टापि विभक्तिकार्ये 'मृत्स्ना' इति ।

**बहुशः** ( ई० ४६ )—बहूनि ददातीति विग्रहे 'बह्वल्पार्थाच्छस्कारकादन्य-तरस्याम्' इति सूत्रेण बहुशब्दात् स्वार्थे शस्प्रत्यये अव्ययत्वात् सोर्लुकि सस्य रुत्वे विसर्गे 'बहुशः' इति ।

**अल्पं ददाति** ( ई० ५३ )—अत्र 'बह्वल्पार्थान्मङ्गलामङ्गलवचनम्' इति वार्तिकनिषेधात् 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति सूत्रेण कन्प्रत्ययो न भवति । 'अल्पं ददात्याभ्युदयिकेषु' अभ्युदयः श्रेयः, तत्प्रयोजनकेषु इष्टापूर्तेषु इत्यर्थः ।

**अतिग्रहाव्यथन** ( ई० ३६ )—अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः' अतिग्रहेषु अव्यथनेषु क्षेपेषु चार्थेषु अकर्तरि तृतीयान्तात् वा तसिः स्यादित्यर्थः । अतिक्रम्य ग्रहोऽतिग्रहः । उदाहरणं यथा—चारित्रतोऽति गृह्यते, चारित्रेण वा ऽतिगृह्यते । चरित्रमेव चारित्रं तेन हेतुना इतरविलक्षणत्वेन दृश्यत इत्यर्थः । अव्यथनम् अचलनम् । उदाहरणं यथा—वृत्ततो न व्यथते, वृत्तेन वा न व्यथते । इति । वृत्तेन न चलतीत्यर्थः । क्षेपो निन्दा । उदाहरणं यथा-वृत्ततः क्षिप्तः वृत्तेन वा क्षिप्तः । वृत्तेन न चलतीत्यर्थः । अकर्तरि इति किम् , देवदत्तेन क्षिप्तः । अत्र 'देवदत्ततः' इति न भवति ।

**प्रवाहिकातः** ( ई० ३७ )—रोगवाचिनः षष्ठ्यन्तात् प्रवाहिकाशब्दात् 'रोगाच्चापनयने' इति सूत्रेण तसि प्रत्यये विभक्तिकार्ये 'प्रवाहिकातः कुरु' इति । विषूचिकाप्रतीकारमस्याः कुरु इत्यर्थः ।

**कृष्णीकरोति** ( ई० ४७,५३,५६ )—अकृष्णः कृष्णः सम्पद्यते, तं करोति कृष्णीकरोति । अत्र विकारभूतकृष्णशब्दात् 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति सूत्रेण अभूततद्भावे च्विप्रत्यये तस्मिन् परे 'अस्य च्वौ' इति सूत्रेण अवर्णस्य ईत्वे च्विप्रत्ययस्य इकारस्य उच्चारणार्थकत्वेन चकारवकारयोरित्संज्ञायां लोपे च जाते च्व्यन्तस्य अव्ययत्वात् सोर्लुकि 'कृष्णी करोति' इति । अकृष्णं कृष्णरूपेण सम्पद्यमानं करोतीत्यर्थः ।

**ब्रह्मीभवति** ( ई० ५४ )—अब्रह्म ब्रह्म सम्पद्यमानं भवतीत्यर्थे ब्रह्मन्शब्दात् 'कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः' इति अभूततद्भावे च्विप्रत्यये सर्वापहारे अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपे 'अस्य च्वौ' इतीत्वे च्व्यन्तस्य अव्ययत्वात् सोर्लुकि उक्तं रूपं सिद्धम् । अत्यन्तस्वार्थिकानामेव प्रातिपदिकात् तद्धितोत्पत्तिः नतु सुबन्तादिति भाष्यनियमः । अतो न च्वेः प्रातिपदिकादुत्पत्तिः, किन्तु सुबन्तादेवेति बोध्यम् ।

**मात्रीकरोति** ( ई० ४० )—अमाता माता सम्पद्यते तं करोतीति विग्रहे 'कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः' इति सूत्रस्थ 'अभूततद्भाव इति वाच्यम्' इति वार्तिकेन स्वार्थे च्विप्रत्ययेऽनुबन्धलोपे 'रीङृतः' इति सूत्रेण ऋतो रीङादेशे तद्धितान्तत्वेन प्रातिपदिकत्वात्सुपः च्व्यन्तस्याव्ययत्वेन 'अव्ययादाप्सुपः' इति सूत्रेण लुकि 'मात्रीकरोति' इति सिद्धम् ।

**उन्मनीस्यात्** ( ई० ४७ )—अनुन्मनाः उन्मनाः सम्पद्यते इति विग्रहे 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति सूत्रेण अन्त्यलोपे च्विप्रत्यये च कृते 'अस्य च्वौ' इति दीर्घे अव्ययत्वात् सुब्लुकि 'उन्मनीस्यात्' इति सिद्धम् ।

**अग्नीभवति** ( ई० ५६ )—कृत्स्नं शस्त्रमग्निः सम्पद्यते इति विग्रहे 'विभाषा साति कार्त्स्न्ये' इति सूत्रेण सातिप्रत्यये 'सात्पदाद्योः' इति षत्वनिषेधे अव्ययत्वात् सुब्लुकि 'अग्निसाद्भवति' इति । विकल्पपक्षे 'कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः' इति अभूततद्भावे च्विप्रत्यये सर्वापहारे 'अस्य च्वौ' इति ईत्वे 'अग्नीभवति' इति । 'समर्थानाम्–' इत्यतः वाग्रहणानुवृत्त्या विकल्पलाभे सिद्धे

सूत्रे विभाषाग्रहणं तु अपवादेन मुक्ते औत्सर्गिकच्व्वेः समावेशार्थमिति 'अग्नीभवति' इत्यत्र च्विप्रत्यये न काप्यनुपपत्तिरित्यवसेयम् ।

**राजसात्सम्पद्यते** ( ई० ५६ )—राजाधीनमित्यर्थः । अत्र 'तदधीनवचने' इति सूत्रेण सम्पदायोगे राजन् शब्दात् सातिप्रत्यये अन्तर्वर्न्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपे अव्ययत्वात् सोर्लुकि उक्तं रूपं सिद्धम् । ( अत्यन्तस्वार्थिकानामेव प्रातिपदिकात् सुबुत्पत्तिरिति न विस्मर्त्तव्यम् ) ।

**विप्रत्राकरोति** ( ई० ३६,४६ )—विप्राधीनं देयं करोतीति विग्रहे 'देयेत्रा च' इति सूत्रेण विप्रशब्दात् त्राप्रत्यये स्वरादेराकृतिगणत्वात् त्रान्तस्य अव्ययत्वेन सोर्लुकि 'विप्रत्राकरोति' इति । अस्मिन्नेवार्थे उक्तसूत्रेण सातिप्रत्यये कृते तु 'विप्रसात्करोति' इति भवति ।

**देवत्रा वन्दे** ( ई० ४२,४६ )—देवान् वन्दे इत्यर्थे देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सूत्रेण त्राप्रत्यये अव्ययत्वात् सोर्लुकि उक्तं रूपं सिद्धम् ।

**पटपटा करोति** ( ई० ४४, ५३ )—अव्यक्तानुकरणात् पटच्छब्दात् डाचि विवक्षिते पूर्वं 'डाचि विवक्षिते द्वे बहुलम्' इत्यनेन द्वित्वे सति पटत् पटत् , इत्यस्यानेकाच्कार्धभागयुक्तत्वात् 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इत्यनेन कृञो योगे डाच्प्रत्ययेऽनुबन्धलोपे 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इत्यनेन तकारपकारयोः स्थाने पकाररूपैकादेशे ततो डित्वादभस्यापि टेर्लोपे तद्धितान्तत्वेन प्रातिपदिकत्वात्सौ तस्य लुकि 'पटपटा करोति इति सिद्धम् ।

**शम्बाकरोति** ( ई० ४५ )—शम्बाशब्दः प्रतिलोमे वर्तते । ततश्च अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति इत्यर्थे 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति सूत्रेण डाच्प्रत्यये डित्वसामर्थ्यात् अभस्यापि टेर्लोपे अव्ययत्वात् सोर्लुकि 'शम्बाकरोति' इति ।

**बीजाकरोति** ( ई० ४६, ५६ )—बीजेन सह कर्षति इत्यर्थे 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति सूत्रेण डाच्प्रत्यये डित्वसामर्थ्यात् अभस्यापि टेर्लोपे अव्ययत्वात् सोर्लुकि 'बीजाकरोति' इति ।

**सुखाकरोति** ( ई० ३९ )—चित्तानुवर्तनेन गुरुं सुखसम्पन्नं करोतीत्यर्थे 'सुखप्रियादानुलोम्ये' इति सूत्रेण सुखशब्दात् डाच्प्रत्यये डित्वसामर्थ्यात् अभस्यापि टेर्लोपे अव्ययत्वात् सोर्लुकि 'सुखाकरोति' इति ।

**मद्राकरोति** ( ई० ४३, ४४, ४७ )—माङ्गल्यमुण्डनेन संस्करोतीत्यर्थे 'मद्रात्परिवापणे' इति सूत्रेण मङ्गलपर्यायवाचीमद्रशब्दात् डाच्प्रत्यये डित्वसामर्थ्यात् अभस्यापि टेर्लोपे अव्ययत्वात् 'सोर्लुकि 'मद्राकरोति' इति सिद्धम् ।

**भद्राकरोति** ( ई० ४१ )—मुण्डनेन संस्करोतीत्यर्थे 'भद्राच्चेति वक्तव्यम्' इति वार्तिकेन भद्रशब्दात् डाच्प्रत्यये डित्वसामर्थ्यात् अभस्यापि टेर्लोपे अव्ययत्वात् सोर्लुकि 'भद्राकरोति' इति ।

ते स्वार्थिकप्रकरणम् ।



## अथ द्विरुक्तप्रकरण

**वृक्षं वृक्षं सिञ्चति** ( ई० ५३ )—कृत्स्नं वृक्षमित्यर्थः । अत्र 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां द्वित्वम् ।

**एकैकमक्षरम्** ( ई० ३७,४६,५६ )—अत्र 'नित्यवीप्सयोः' इति द्वित्वे सति एकम् एकम् इत्यवस्थायाम् 'एकं बहुव्रीहिवत्' इति बहुव्रीहिवद्भावेन सुब्लुकि वृद्धौ समुदायात् सौ तस्य अमादेशे पूर्वरूपे 'एकैकम्' इति । न च 'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवे'ति समासग्रहणनियमेन समुदायस्य प्रातिपदिकत्वाभावात् कथमिह सुपो लुक्, कथं वा समुदायात् सुबिति वाच्यम्, बहुव्रीहिवद्भावादेव प्रातिपदिकत्वेन समुदायात् सुब्विधानेनादोषात् ।

**एकैकया आहुत्या** ( ई० ४५, ५३, ५६ )—एकयेत्यस्य 'नीत्यवीप्सयोः' इत्यनेन द्वित्वे कृते एकया-एकया-इति स्थिते 'एकं बहुव्रीहिवत्' इत्यनेन बहुव्रीहिवद्भावे द्वयोरपि 'सुपो धातुप्रातिपदिकयोः, इत्यनेन लुकि पूर्वखण्डस्य पुंवद्भावे ततो वृद्धौ समुदायात्पुनस्तृतीयोत्पत्तौ 'एकैकया' इति सिद्धम् । बहुव्रीहित्वाऽभावे तु सुपो लुक् पूर्वखण्डस्य पुंवद्भावश्च न स्यात्, उत्तरपदपरकत्वाभावात्—'उत्तरपद-शब्दो हि समासस्य चरमावयवे रूढः' इत्युक्तत्वात् । न च सुब्लुकि सति पूर्वखण्ड-स्य पुंवद्भावाऽभावेऽपि वृद्धौ सत्याम् 'एकैकया' इति सिद्धौ पुंवद्भावस्य न किञ्चित्प्रयो-जनमिति वाच्यम्, 'तस्य पूर्वोऽवग्रहः' इति प्रातिशाख्येनाऽवग्रहे विशेषावगमात् ।

**एकैकस्मै देहि** ( ई० ३८, ४४ )—अत्र 'नित्यवीप्सयोः' इत्यनेन द्वित्वे कृते 'एकं बहुव्रीहिवत्' इत्यनेन द्वयोरपि बहुव्रीहिवद्भावात्सुब्लोपे वृद्धौ प्रातिपदि-

कत्वान्ङे विभक्तौ सर्वादिपठितैकशब्दान्ततया पुनः सर्वनामसंज्ञायां स्मैभावे सति 'एकैकस्मै देहि' इति सिद्धम्। नन्वत्र बहुव्रीहिवत्त्वे सति 'न बहुव्रीहौ' इत्यनेन सर्वनामसंज्ञानिषेधात् कथं सर्वनामकार्यमिति चेत्? मैवम्, 'विभाषादिक्समासे बहुव्रीहौ' इत्यनेनैव बहुव्रीह्यनुवर्त्तनात्कार्यसिद्धौ पुनर्बहुव्रीहिग्रहणेन यत्र प्राधान्येन बहुव्रीहिस्तत्रैव निषेधो न त्वतिदिष्टबहुव्रीहाविति ज्ञापनेनादोषात्। वस्तुतस्तु बहुव्रीहावपि सर्वनामत्वस्य भाष्यसंम्मततया बहुव्रीहिवत्त्वातिदेशे सत्यपि सर्वनामत्वस्य निर्बाधात्। सूत्रसत्त्वेऽपि उपसर्जनत्वादेव बहुव्रीहौ सर्वनामत्वनिषेधसिद्धौ बहुव्रीह्यर्थके अलौकिकविग्रहवाक्ये एव समासात्प्राक्सर्वनामत्वनिषेधे बहुव्रीह्यतिदेशप्रयुक्तसर्वनामकार्याभावशङ्काया एवाभावात्।

**गतगतः** ( ई० ४०, ५४, ५६ )—विरहात्पीड्यमानस्य इयमुक्तिः। प्रियां विना कालो गतः इति तात्पर्ये 'अबाधे च' इति सूत्रेण गत इत्यस्य द्वित्वे बहुव्रीहिवद्भावे च कृते समुदायस्य प्रातिपदिकत्वेन सुब्लुकि समुदायात् सौ रुत्वे विसर्गे 'गतगतः' इति।

**गतगता** ( ई० ४१ )—प्रियेति शेषः। स्त्रीविरहात् पीड्यमानस्योक्तिः। 'अबाधे च' इत्यनेनात्र पीडायां द्योत्यायां गता शब्दस्य द्वित्वे बहुव्रीहिवद्भावे च कृते समुदायस्य प्रातिपदिकत्वेन सुब्लुकि 'स्त्रियाः पुंवत्–' इति पुंवद्भावे समुदायात् सौ हल्ङ्यादिना लोपे 'गतगता' इति।

**परस्परम्** ( ई० ४०, ५३ )—अत्र परामिति स्त्रीत्वे तस्य द्वित्वे दलद्वयेऽपि पुंवत्वाट्टापो निवृत्तौ 'स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः' इत्यनेनाम्भावविरहे 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' इत्यनेन पूर्वपदस्थस्य सुपः सुर्भावे रेफस्य विसर्गे 'कुप्वो'रिति प्राप्तमुपध्मानीयमपवाद्य कस्कादित्वात्सत्वे एकस्य सस्य लोपे समुदायात्सौ तस्यामादेशे कृते 'परस्परम्' इति सिद्धं भवति। नपुंसकत्वेऽप्येवमेव रूपम्। आम्भावे तूभयत्र 'परस्पराम' इति रूपं भवति।

**इतरेतराम्** ( ई० ४१ )—इतरामित्यस्य 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इत्यनेन द्वित्वे 'दलद्वये टाबभावः' इत्युक्तत्वेन पुंवत्वाट्टापो निवृत्तौ उत्तरपदस्थविभक्तेः 'स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः' इत्यनेनाम्भावे 'समासवच्च बहुलम्' इत्यनेन नित्यसमासवद्भावे पूर्वपदस्थविभक्तेर्लुकि गुणे

प्रातिपदिकत्वात्सौ तस्यापि लुकि 'इतरेतराम्' इति सिद्धम् । आम्भावविरहे तु—'इतरेतरम्' इति रूपं भवति ।

**दलद्वये** ( ई० ३७, ४१, ४३, ४४, ५६ )—

'दलद्वये टाबभावः, क्लीबे चाऽदड्विरहः स्वमोः ।
समासे सोरलुक् चेति, सिद्धं बाहुलकात् त्रयम् ॥

'कर्मव्यतिहारे सर्वनाम्नः' इत्यत्र बहुलग्रहणस्य प्रयोजनमाह—'दलद्वयेति' । स्त्रीलिङ्गेषु 'अन्य-पर-इतरशब्देषु कर्मव्यतिहारे द्वित्वे सति 'अन्योन्यम्' इत्यादौ पूर्वोत्तरखण्डयोः टाब्निवृत्तिर्बहुलग्रहणस्य प्रथमं प्रयोजनम् । क्लीबे च अन्योन्यम्, इतरेतरम्, इत्यादौ 'अद्ड्डतरादिभ्यः—' स्वमोः प्राप्तोऽद्ड्बाहुलकाद् न भवतीति तस्य द्वितीयं प्रयोजनम् । अन्येन आश्रयः = अन्याश्रयः इत्यादौ सोर्लुक् प्राप्तः बाहुलकात् न भवतीति सोरलुक् चेति तृतीयं प्रयोजनम् ।

**प्रियप्रियेण** ( ई० ३६ )—अत्र हि 'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्' इत्यनेन तृतीयान्तप्रियशब्दस्य विकल्पेन द्वित्वे 'कर्मधारयवदुत्तरेषु' इत्यधिकाराद्द्वित्वपक्षे कर्मधारयत्वात् तृतीयैकवचनसुपो लुकि पुनः समुदायात्तृतीयाविभक्तौ तस्येनादेशे णत्वे च कृते 'प्रियप्रियेण' इति सिद्धम् । पक्षे—प्रियेण इत्येव । अत्र च 'ददाति' इति क्रियापदमादाय अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थो ज्ञेयः ।

**यथायथं ज्ञाता** ( ई० ४५ )—यथेत्यव्ययस्य 'यथास्वे यथायथम्' इत्यनेन द्वित्वे समुदायस्य क्लीबत्वे च विहिते प्रातिपदिकात्सौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति सूत्रेण ह्रस्वे ततः सोरमि कृते 'यथायथम्' इति सिद्धम् । न च 'नित्यवीप्सयोः' इत्यनेनैव वीप्सया द्वित्वं सिद्धमिति वाच्यम्, द्वित्वविषयस्य शब्दस्य लक्षणया कार्त्स्न्यविशिष्टे वृत्तावेव वीप्साया द्विर्वचनविधानात्, अन्यथा 'सर्वो घटः' इत्यादौ सर्वशब्दस्याऽपि द्वित्वापत्तिः स्यात् । न चैवमपि क्लीबत्वविधानं किमर्थमिति वाच्यम्, तदभावेऽव्ययत्वादलिङ्गत्वापत्तेः । ज्ञातेत्यत्र तृन् प्रत्ययः, अत एव तद्योगे 'न लोके'ति षष्ठीनिषेधात् कर्मणि द्वितीया । तृजन्तत्वे 'यथायथस्य ज्ञाता' इति षष्ठ्येव ।

**द्वन्द्वं रहस्य मर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाऽभिव्यक्तिषु** ( ई० ४५, ५३, ५६ )—अस्यार्थस्तु–द्विशब्दस्य द्विर्वचनं, पूर्वपदस्याऽम्भावोऽत्व-

श्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु इति। उदाहरणानि यथा—द्वन्द्वं मन्त्रयते, आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति, द्वन्द्वं व्युत्क्रान्ताः, द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति, द्वन्द्वं संकर्षणवासुदेवौ। योगविभागादन्यत्राऽपि इष्यते यथा—द्वन्द्वं युद्धं प्रवर्तते। यथा च—द्वन्द्वानि सहते। अत्र शीतमुष्णं च एकं द्वन्द्वम्, सुखं दुःखं चापरम्, क्षुत्तृष्णा चाऽन्यत्।

**द्वन्द्वम्** (ई० ३७, ४७, ५४)—द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थे—'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' इत्यनेन द्विशब्दस्य द्विर्वचने द्वि औ इति दशायाम् कर्मधारयवद्भावात् सुब्लुकि कृते, पूर्वपदावयवस्य इकारस्य अम्भावे उत्तरपदावयवस्य इकारस्य अत्वे च कृते नपुंसकत्वे एकवद्भावे च निपातनाद् सम्पादिते तद्धितान्तत्वेन प्रातिपदिकत्वात् सौ तस्यामादेशे कृते 'द्वन्द्वम्' इति साधु। नचोत्तरपदस्येकारस्य त्यदाद्यत्वेनैवात्वे सिद्धेऽत्र किमर्थन्तद्विधानमिति वाच्यम्, संज्ञात्वेन तदप्राप्तेः।

इति द्विरुक्तप्रकरणम्

समाप्तश्चेदं तद्धितप्रकरणम्।

# तिङन्तप्रकरणम्

## अथ भ्वादयः

**लः कर्मणि च भावे चाऽकर्मकेभ्यः** ( ई० ३८ )—वाक्यद्वयात्मकमिदं सूत्रम् , तथाहि–'लः कर्मणि च' इति प्रथमं वाक्यम्। तत्र 'ल' इति प्रथमा-बहुवचने रूपम्। चकारात् 'कर्त्तरि कृत्' इति सूत्रात्कर्तरीत्यनुकृष्यते, धातो-रित्यस्य चाधिकाराल्लाभः। एवञ्च–धातोः लकाराः कर्मणि कर्तरि च स्युरिति लभ्यते। इदञ्च सकर्मकधातुविषयकमेव, अकर्मकेषु कर्मणीत्यस्य बाधितत्वात्। तथाच— लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्त्तरि स्युरिति। सकर्मकेभ्योऽपि भावलकार-प्रवृत्तौ तु–'देवदत्तेन घटं क्रियते' इत्यादौ भावलकारेण कर्मणोऽनुक्तत्वात् द्वितीया-पत्तिः स्यात्। 'भावे चाऽकर्मकेभ्यः इति' द्वितीयं वाक्यम्। अत्रापि पूर्ववदेव चकारेण कर्तैवानुकृष्यते न तु कर्म असम्भवात्। एवञ्च–अकर्मकेभ्यो धातुभ्यो भावे कर्तरि च लकाराः स्युरित्यर्थः। अकर्मकपदेनाविवक्षितकर्मका अपि अत्र गृह्यन्ते तेन 'देवदत्तेन भुज्यते' इत्यत्र विद्यमानस्याप्योदनरूपकर्मणोऽविवक्षायां भावे लकारो भवत्येवेत्यवधेयम्। ननु भावकर्मणोरात्मनेपदविधानात 'शेषात्कर्तरि परस्मैपदम्' इति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातुं शक्यन्ते इति व्यर्थमिदं सूत्रमिति चेन्न, एतत्सूत्राभावे सकर्मकेभ्योऽपि घञादिवद्भावे लकारा-पत्तौ 'घटं क्रियते देवदत्तेन' इत्यादिप्रयोगापत्तेः।

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः** ( ई० ४४ )— अत्र उपाच्चारितं पदमुपपदम्। समानमेकमधिकरणं वाच्यं यस्येति विग्रहः। भिन्न-प्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः समानाधिकरणम् , सामानाधिकरण्यं च युष्मदस्तिङः स्थानीभूतलकारेण विवक्षितम् , 'लः परस्मैपदमि'त्यतस्तदनुवृत्तेः। स्थानं प्रसङ्गोऽस्यास्तीति स्थानी तस्मिन् , प्रसक्ते सतीत्यर्थः। तथा च तिङ्वाच्य-कारकवाचिनि युष्मदि उपपदेऽप्रयुज्यमाने प्रयुज्यमाने च मध्यमः स्यादित्यर्थः सम्पद्यते। उदाहरणं यथा—भवसि। अत्र तिङ्वाच्यकारकवाचिनो युष्मदोऽप्रयु-ज्यमानेऽपि मध्यमपुरुषो भवति। 'त्वं भवसी'त्यत्र तु—तिङ्वाच्यकारकवाचिनो युष्मदः प्रयुज्यमानेऽपि मध्यमपुरुषो भवति।

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च** ( ई० ४१, ४४ )—अत्र सूत्रे, प्रहासे च मन्योपपदे' इत्येकं वाक्यम् । मन्यतेरुत्तम एकवच्चेति द्वितीयं वाक्यम् । तत्र प्रथमे 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्यतो 'मध्यम' इत्यनुवर्तते' मन्धातुः श्यन्विकरणः उपपदं यस्येति बहुव्रीहिः, मन्यपदश्रवणबलाद्धाताविति विशेष्यं लभ्यते, तथाचार्थः—मन्यधातुरुपपदं, यस्य धातोस्तस्माद्धातोर्लस्य स्थाने अस्मद्युपपदे मध्यमः स्यात् परिहासे गम्यमाने, इति । द्वितीयवाक्ये पूर्वसूत्रा'युष्मद्युपपदे' इत्यनुवर्तते 'अस्मद्युत्तम' इत्युत्तरसूत्रात् उत्तम इत्यपकृष्यते, तथाचार्थः—युष्मद्युपपदे मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् इति । उदाहरणं यथा—एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः । अत्र भुजेरुत्तमपुरुषे प्राप्ते मध्यमः पुरुषः, मन्यतेस्तु मध्यमपुरुषे प्राप्ते उत्तमः पुरुषः ।

**हलादिः शेषः**—'हलादिः शेषः' अभ्यासस्यादिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते इति सूत्रार्थे 'पपाच' इत्यादौ अभ्यासस्यादिर्हल् वर्तते, तत्र अन्यहलो लोपो भवति । ननु 'आट, आटतुः' इत्यादौ तु अभ्यासस्याद्यक्षरो हल् नास्ति तत्र कथं हल्लोपः स्यादिति चेदुच्यते—'ह्रस्वोऽहलादिः शेषः' इति संहितापाठः, अभ्यासस्य ह्रस्वो भवतु । ततोऽभ्यासोऽहल् भवतु-हल्रहितो भवतु, ततोऽभ्यासस्यादिः शिष्येत् , अभ्यासस्याद्यक्षरो वर्ततां नाम इति वाक्यार्थत्रयेणा जादिधातुष्वपि अभ्यासोऽहल् भवतु इति वाक्यार्थेन न काप्यनुपपत्तिरिति दिक् ।

**बभूव** ( ई० ४५ )—भूधातोः 'परोक्षे लिट्' इति लिटि इकारटकारयोरित्संज्ञायां लोपे च कृते 'भू ल्' इति स्थिते 'तिप्तस्झि' इति लः स्थाने तिपि तत्स्थाने 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति णलि अनुबन्धलोपे 'भू अ' इति दशायां नित्यत्वाद्गुणवृद्धी बाधित्वा 'भुवो वुग्लुङ्लिटोः' 'इति भूधातोर्वुगागमे अनुबन्धलोपे 'भुव् अ' इति जाते 'लिटि धातोरनभ्यासस्य' इति भुवो द्वित्वे 'भुव् भुव् अ' इति दशायां 'पूर्वोऽभ्यासः' इति पूर्वस्य 'भूव्' इत्यस्य अभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इत्यनेन ह्रस्वे 'भु भूव् अ' इति स्थिते 'भवतेरः' इत्यभ्यासोकारस्य अकारे 'भ भूव् अ' इति स्थिते 'अभ्यासे चर्च' इत्यभ्याससंज्ञकस्य भस्य बकारे 'बभूव' इति सिद्धम् ।

**बभूविथ**—भूधातोः 'परोक्षे लिट्' इति लिटि अनुबन्धलोपे 'भू ल्' इति स्थिते लः स्थाने मध्यम-पुरुषैकवचनविवक्षायां सिपि 'लिट् च' इति सिपः आर्ध-

धातुकसंज्ञायां 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति सिपस्थलादेशे अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इति थस्य इडागमे अनुबन्धलोपे 'भू इ थ' इति दशायां 'भुवो वुग् लुङ्लिटोः' इति भुवो वुगागमे अनुबन्धलोपे 'भुव् इ थ' इति जाते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इत्यनेन अभ्यासस्य ह्रस्वे 'भु भूव् इ थ' इति जाते 'भवतेरः' इत्यभ्यासस्योकारस्य अकारे 'भ भूव् इ थ' इति स्थिते 'अभ्यासे चर्च' इति भस्य बत्वे 'बभूविथ' इति सिद्धम् ।

**'येन नाव्यवधानम्' इत्यस्याभिप्रायः**—ननु 'पुगन्तलघूपधस्य च' इत्यत्र 'सार्वधातुकार्धधातुकयोः' इत्यस्याङ्गविशेषणत्वं सार्वधातुकार्द्धधातुकाऽव्यवहितस्याङ्गस्येको गुणो भवतीत्यर्थकरणे भिनत्तीत्यत्रापि गुणापत्तिः, तयोरिको विशेषणत्वे तु 'भेत्ता' इत्यत्रापि गुणो न स्यात्तकाररूपस्यैकवर्णस्य व्यवधानेन सार्वधातुकाऽव्यवहितत्वाऽभावादित्याशङ्क्य समाधत्ते—'येन नाव्यवधानं तेन व्यवहितेऽपि भवति' इति । यद्वर्णकर्तृकव्यवधानशून्यत्वं न सम्भवति तद्वर्णव्यवधानेऽपि भवतीति तदर्थः । तथाच सूत्रसार्थक्यायैकवर्णव्यवधाने प्रवृत्तावप्यनेकवर्णव्यवधानेऽप्रवृत्त्या 'भेत्ता' इत्यत्र गुणो जातः, 'भिनत्ती'त्यादौ तदभावश्च । 'दीधीवेवीटाम्' इत्यत्रत्येड्ग्रहणस्यैवात्र ज्ञापकत्वम् । एवञ्च अस्मिन्निषेधसूत्रे गुणाऽभावार्थमेवेटो ग्रहणम्, उक्तरीत्या गुणाऽभावोपपादनेन व्यर्थमेवेटो ग्रहणं; ज्ञापिते तूक्तार्थे सर्वं समञ्जसम् ।

**'ङिच्च' इत्यस्य कथमुत्सर्गेण बाधः**—'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परापेक्षयाऽपवादस्य प्रबलत्वात् भवतादित्यादिषु 'ङिच्च' इत्यन्तादेशत्वमेव युक्तमिति चेद्, सत्यम् । तथापि अन्तादेशत्वादन्यार्थशून्येषु आनङादिषु चरितार्थो 'ङिच्च' इति विधिः, द्विष्टादित्यादौ लघूपधादिगुणनिषेधेन, स्तुतात्, युतादित्यादौ 'उतो वृद्धिर्लुकि हलि' इति विहिताया वृद्धेर्निषेधेन उष्टादित्यत्र सम्प्रसारणेन च सम्भवत्प्रयोजने तातङो ङकारे मन्दं मन्दं प्रवृत्तः सन् परेणोत्सर्गसूत्रेण बाध्यते । ननु तातङ्विषये 'ङिच्च' इति विधिर्मन्दं प्रवर्तताम्, तथापि पूर्वोक्तपरिभाषया परस्यापि सर्वादेशविधेरपवादभूतेन 'ङिच्च' इत्यनेन बाध एवोचितः, सत्यम् । तथापि इहोत्सर्गापवादयोर्द्वयोरपि समबलत्वम् । अपवादशास्त्रस्य हि परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम् । तेन 'ङिच्च' इति विधिः आनङादिङित्वमन्तादेशत्वैकप्रयोजनकं प्रयोजनान्तरविरहेण निरवकाशत्वात्

झटिति परिगृह्णन् कृतार्थतामनुभवन् तातङो ङित्त्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षते।

**भविता** ( ई० ३९, ४३, ५६ )—सत्तार्थक–भू–धातोर्लुटि तत्स्थाने तिपि अनुबन्धलोपे शपमपवाद्य 'स्यतासी लृलुटोः' इत्यनेन तासिप्रत्यये तस्य 'आर्धधातुकं शेषः' इत्यनेन आर्धधातुकसंज्ञायाम्, 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणेऽवादेशे 'लुटः प्रथमस्य डारौरसः' इत्यनेन तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'भवित्–आ' इत्यवस्थायां 'पुगन्तलघूपधस्य च' इत्यनेन गुणे प्राप्ते 'दीधीवेवीटाम्' इत्यनेन तन्निषेधे सति 'भविता' इति सिद्धम्। नन्वत्राङ्गावयवस्येकस्तदुपरितनहला व्यवधानात् सार्वधातुकपरत्वाभावादिको गुणेऽप्राप्ते तन्निषेधो व्यर्थ इति चेत्? मैवम्, वचनारम्भसामर्थ्येन येन स्थान्युत्तरवर्णेन परनिमित्तस्य व्यवधानमवर्जनीयं तेन वर्णेन व्यवहितेऽपि परनिमित्तं कार्यं भवतीति विज्ञानात्। नच व्यवहितस्यापीको गुणप्रवृत्तिस्वीकारे भिनत्ति, छिनत्तीत्यादावपि गुणप्रसङ्ग इति वाच्यम्, स्वचारितार्थ्यायैकवर्णव्यवधाने प्रवृत्तावप्यनेकवर्णव्यवधाने प्रवृत्तौ बीजाभावात्।

**भवतात्** ( ई० ३८, ४६ ) भू–धातोर्लोटि तत्स्थाने तिपि, अनुबन्धलोपे सार्वधातुकसंज्ञायां 'कर्त्तरि शप्' इति शपि, अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे तस्यावादेशे 'एरुः' इत्यनेनेकारस्योकारे 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इत्यनेन तातङो ङित्वादनेकाल्त्वाच्चोभयोरपि प्रवृत्तौ परत्वादनेकाल्त्वात्सर्वादेशे सति 'भवतात्' इति सिद्धम्। ननु 'ङिच्च' इत्यस्य यत्र प्रवृत्तिस्तत्र सर्वत्रानेकाल्त्वस्य प्रवृत्तौ निरवकाशत्वेनापवादत्वादुकारस्यैव तातङादेशे इष्टरूपं न सिद्ध्येदिति चेत्? सत्यम्, अनन्यार्थङित्वेषु 'सखा' इत्यादावनङादिषु लब्धप्रयोजनकस्य ङिच्चेत्यस्य, द्विष्टात्, स्तुतात्, उष्टात्, इत्यादिषु क्रमेण गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तौ, उत्सर्गापवादयोः समबलत्वात्परत्वादनेकाल्त्वेन सर्वादेशस्यैव प्रवृत्तेः। उक्तञ्च भाष्यकृताऽपि–'ङित्वस्य सावकाशत्वाद्विप्रतिषेधात्तातङ् सर्वादेशः' इति।

**भवानि**—भूधातोः 'लोट् च' इति 'आशिषि लिङ्लोटौ' इति वा लोटि तत्स्थाने 'तिप्तस्झि०' इत्यादिना मिपि अनुबन्धलोपे 'भू मि' इति स्थिते 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि अनुबन्धलोपे शपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः' इति गुणे आवादेशे 'भव मि' इति दशायां

'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽमादेशे प्राप्ते तं प्रबाध्य 'मेर्निः' इति मेर्न्यादेशे इकारोच्चारणसामर्थ्यादिकारस्योत्वाऽभावे 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'अतो दीर्घो यञि' इति दीर्घे 'भवानि' इति सिद्धम् ।

**भवेत्** ( ई० ४०,४१,४३ )—भूधातोः 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति लिङि तत्स्थाने 'तिप्तस्झि०' इत्यादिसूत्रेण तिपि अनुबन्धलोपे 'भू ति' इति स्थिते तिपः सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'भू अ ति' इति स्थिते शित्वात् सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भवति' इति जाते 'इतश्च' इतीकारलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति यासः सस्य लोपे प्राप्ते तं प्रबाध्य 'अतो येयः' इति यासः स्थाने इयादेशे 'भव इय् त्' इति जाते 'आद्गुणः' इति गुणे 'लोपो व्योर्वलि' इति यलोपे 'भवेत्' इति सिद्धम् ।

**(क) यासुटो ङित्करणस्य प्रयोजनम्—**

भूयादित्यत्र यासुटो ङित्वस्य गुणाभावरूपं न फलं, गुणाभावस्य लिङो ङित्वेनैव सिद्धत्वात् । 'यदागमा' इति न्यायेन यासुडागमो लिङादेशपरस्मैपदावयवः । अवयवे कृतं ङित्वमानर्थक्यात्तदङ्गन्यायेन समुदाये आगमविशिष्टतिबादौ विश्राम्यति, ततश्च स्थानिवत्त्वेनैव ङित्वसिद्धेर्यासुटो ङित्वविधिर्व्यर्थः । न च स्थानिभूतलिङो लकारस्याल इत्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधः शङ्क्यः । 'घुमास्थागापाजहातिसां हलि' इति 'क्ङिति' विहितस्य ईत्वस्य 'न ल्यपि' इति निषेधेनानुबन्धकार्येऽनल्विधाविति निषेधाभावज्ञापनादतो दीक्षिताभिप्रायः सङ्गत एव । ननु क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध इत्यत्र यासुटो ङित्ववचनं ज्ञापकं भवितुं नार्हति । अनुबन्धकार्ये सर्वत्रानल्विधाविति निषेधाभावे सत्यपि यासुटो ङित्वस्य तिप्सिप्मिबागमयासुटो ङित्वार्थमावश्यकत्वात् । नहि लिङादेशत्वेऽपि तिप्सिप्मिपां ङित्वं स्थानिवत्त्वलभ्यम् । 'हलः श्नः शानज्झौ' इति सूत्रभाष्ये 'ङिच्च पिन्न पिच्च ङिन्न' इति प्रपञ्चितत्वात् । अत एव स्त्र्यादिस्यादौ विशेषविहितेन ङित्वेन पित्वस्य बाधात् 'उतो वृद्धिर्लुकि हलि' इति न प्रवर्तते इत्यपरितोषात् ङित्वोक्तिं परित्यज्य शानचः शित्त्वमाश्रितम् ।

**(ख) यासुटो ङित्करणस्य प्रयोजनम्—**'न ल्यपि' इति सूत्रेणाऽनुबन्धकार्ये कर्तव्ये 'अनल्विधौ' इति निषेधो न प्रवर्तते इति ज्ञापितेन स्थानिवद्भा-

वात् लिङ्वृत्तिङित्वधर्मस्यानयनेन ङित्त्वप्रयुक्ते कार्ये सिद्धे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति सूत्रे ङिद्ग्रहणं व्यर्थमेव। तदेव व्यर्थं सत् 'क्वचिदनुबन्धकार्येऽपि 'अनल्विधौ' इति निषेधः प्रवर्तते' इति ज्ञापयति। तेन 'वक्ष्यमाणा' इत्यत्र ङीपोऽभावः सिद्धः इति फलम्। न च भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यायादौपदेशिकत्वेन तिबादिवृत्तिपित्वेन आरोपितो लिङ्वृत्तिङित्वधर्मो बाध्यते इति 'यासुट्' इति सूत्रे ङिद्ग्रहणं सफलमिति वाच्यम्? 'हलः श्नः शानज्झौ' इत्यत्र पूर्ववत्स्थानिवत्त्वेन शित्वधर्मस्य आनयनेन सिद्धौ व्यर्थीभूतेन शानच्घटकशकारेण पूर्वार्थस्य ज्ञापितत्वात्।

**'अतो येयः' इत्यत्र 'सार्वधातुके' इत्यनुवृत्तेः फलम्**—'अतो येयः' इत्यत्र सार्वधातुकपदाननुवृत्तौ 'मध्ये पठिता अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्यायात् 'अतो येयः' इति शास्त्रम् 'अतो लोप' इत्यस्यैव बाधको भवेत्, न तु 'अतो दीर्घो यञि' इति सूत्रस्य। एवञ्च 'चिकीर्ष्याद्' इत्यत्र इयादेशापत्तिः, भवेदित्यत्र च परत्वाद् 'अतो दीर्घो यञि' इति सूत्रेण दीर्घापत्तिरिति दोषद्वयपरिहारार्थं सार्वधातुकपदानुवृत्तिः कार्येति दिक्।

**'भवेयुः' इत्यत्र 'उस्यपदान्तात्' इत्यस्य प्राप्तिः कथं नेति**—'भव या उस्' इति स्थिते परत्वान्नित्यत्वाच्च 'उस्यपदान्तात्' इति सूत्रं बाधित्वा 'अतो येयः' इति इयादेशे गुणे 'भवेयुः' इति प्राञ्चः। वस्तुतस्तु सार्वधातुकसंज्ञानिरपेक्षस्य 'उस्यपदान्तात्' इति सूत्रस्यान्तरङ्गत्वेन पररूपमेव न्याय्यं स्यादिति 'अतो येयः' इति सूत्रस्य सार्वधातुकावयवस्य यास् इत्यस्येयादेशः स्यादिति व्याख्या कार्या। तेन च सलोपस्यापवाद इय् स्यात्। दिक्।

**भूयात्**—भूधातोः 'आशिषि लिङ्लोटौ' इति लिङि तत्स्थाने 'तिप्तस्झि' इत्यादिना तिपि 'लिङाशिषि' इति आर्धधातुकत्वात् शपोऽभावे 'भू ति' इति स्थिते 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'भू यास् ति' इति दशायाम् 'इतश्च' इति तिप इकारस्य लोपे 'किदाशिषि' इति यासुटः कित्वेन 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भूयात्' इति दशायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते यासुटः कित्वेन 'क्ङिति च'ेति निषेधे उक्तं रूपं सिद्धम्।

**अस्तिसिचोऽपृक्ते** (ई० ३८, ४०)—अत्र प्राचीनास्तु-अस्ति च सिच्चेति समाहारद्वन्द्वे अस्तिसिच् तस्मादिति विग्रहः। 'ब्रुव ईट्' इत्यतः ईडित्यनुवर्तते 'तस्मादित्युत्तरस्य' इतिपरिभाषया 'अस्तिसिचः' इति पञ्चमी 'अपृक्तस्ये'ति षष्ठी

प्रकल्पयति । ततश्च अस्तेः सिचश्च परस्याऽपृक्तस्य ईडागमः स्यादित्यर्थः इति व्याचक्षते । परन्तु नैदद्विचारसहम्—तथा सति अस्तेर्लुङि भूभावे अभूदिति न स्यात्, तत्र स्थानिवत्त्वेनास्तितया तत्राऽपृक्तस्य हल ईडागमस्य दुर्वारत्वात् । तथा—अगात्, अस्थात्, इत्यादावपि 'गातिस्थाघुपाभूभ्यः सिचः परपरस्मैपदेषु' इत्यनेन सिचो लुक्यपि स्थानिवत्त्वेन सिचः परत्वादीडागमः स्यादतः सिच्च अस् चेति समाहारद्वन्द्वः । ननु सिचस्शब्दे सिच्शब्दस्य पूर्वखण्डस्यान्तर्वर्ति विभक्त्या पदत्वात् 'चो कुः' इत्यनेन कुत्वापत्तिरिति चेत् ? नैवम्, भत्वेन पदत्वस्य बाधात् । न चैवं सिचस्शब्दे असित्यनेनैवास्तेर्लाभादस्तिग्रहणं व्यर्थमिति वाच्यम्, लुप्तसुब्विभक्तिकस्यास्तीतिविभक्तिप्रतिरूपकाव्ययस्य ग्रहणेन तस्यैव कर्मधारये सति सार्थक्यात् । पञ्चम्याश्च न सौत्रत्वाल्लुक् । 'उतो वृद्धिर्लुकि हलि' इत्यतोऽनुवृत्तस्य हलीत्यस्य षष्ठ्या विपरिणामः । तथा च—विद्यमानात्सिचोऽस्तेश्च परस्याऽपृक्तस्य हल ईडागमः स्यादित्यर्थो भवतीति समालोचनकुशला व्याचक्षते ।

**अभूत्** ( ई० ३६, ४०, ५६ )—सत्तार्थकभूधातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेन अडागमे, मध्ये शपमपवाद्य 'च्लि लुङि' इत्यनेन च्लिप्रत्यये तस्य 'च्लेः सिच्' इत्यनेन सिजादेशे अनुबन्धलोपे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इत्यनेन सिचो लुकि 'इतश्च' इतीकारलोपे 'अभूत्' इति सिद्धम् । अत्र 'सार्वधातुकार्धधातुकयो'रित्यनेन गुणस्तु न भवति 'भूसुवोस्तिङि' इति निषेधात् । न च 'अस्तिसिचोऽपृक्ते' इत्यनेन ईट् कथन्नेति वाच्यम्, विद्यमानात्सिचः परस्य हल ईड्विधानेन प्रकृते सिचो लोपात् । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति तु न, 'न लुमताङ्गस्य' इत्यनेन निषेधात् । न च 'आहिभुवोरीट् प्रतिषेधः' इति वार्तिकेनेड्निषेधः शङ्क्यः, तस्य भाष्ये प्रत्याख्यानात् ।

**लिङ्निमित्ते**—'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ' इत्यादि लिङो निमित्तं, तस्मिन् 'लिङ्निमित्ते' । क्रियाया अतिपत्तिः = अनिष्पत्तिः, क्रियातिपत्तिः तस्यां क्रियातिपत्तौ । 'भविष्यति मर्यादावचनेऽवरस्मिन्' इत्यतो भविष्यतीत्यनुवर्तते । ततश्च—'हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्' इत्यर्थः पर्यवस्यति । उदाहरणं तु 'सुवृष्टिश्चेद् अभविष्यत् ( सुविष्टिर्भवेच्चेत् ) तदा सुभिक्षम् ( अपि ) अभविष्यत्' इत्यादि ज्ञेयम् । अत्र हेतुहेतुमद्भावगम्यमाने सति लिङर्थे भूधातोर्लृङ् निष्पद्यते ।

**प्रणिभवति**—( ई० ४५ )—प्रनि उपसर्गात् भूधातोर्लटि तिपि शपि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे शेषे विभाषाऽकखादावषान्त उपदेशे' इति सूत्रेण णत्वे 'प्रणिभवति' इति। णत्वाभावे 'प्रनिभवति' इति। ननु णत्वप्रकरणं संहिताधिकारस्थम्, ततश्च अविवक्षितायां संहितायाम् उपसर्गात् परत्वाऽभावात् णत्वाऽभावः, विवक्षायां तु णत्वमिति विकल्पसिद्धेः किमिह प्रकृतिसूत्रे 'विभाषाग्रहणमिति चेन्न—

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥'

इति हरिणोक्तत्वात्।

अयम्भावः—१. एकपदे संहिता ( सन्धिः ) नित्या, २. धातु-उपसर्गयोः संहिता नित्या, ३. समासे संहिता नित्या, ४. ( किन्तु ) वाक्ये सा ( संहिता ) विवक्षाम् ( वक्तुः इच्छा विवक्षा ताम् ), अपेक्षते। उदाहरणानि यथा—१. ने × अनम् = नयनम्, २. अधि × आस्ते = अध्यास्ते, ३. शिवस्य + अर्चनम् = शिवार्चनम्, ४. इन्दुमती × उवाच = इन्दुमत्युवाच, इन्दुमती उवाच वेति।

**कृञ्चाऽनुप्रयुज्यते लिटि** ( ई० ४६ )—अत्र सूत्रे 'कृञा एव भ्वस्त्योरपि ग्रहणम्, तथाहि–यद्युक्तसूत्रतः कृञ एकस्यैवानुप्रयोगः स्यात्तर्हि 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये'ति सूत्रे 'अनुप्रयुज्यमानस्ये' त्यस्य 'कृञ' इति विशेषणं व्यर्थं स्यात् धात्वन्तरस्याऽनुप्रयोगाऽप्रसक्तेः। ततश्च 'कृञ' इति विशेषणादन्यस्याऽपि प्रयोगो भवतीति विज्ञायते। नचाऽस्त्वन्यस्य प्रयोगः किन्तु भ्वस्त्योरेव कुत अवगम्यत इति वाच्यम्, 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' इत्यतः 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ' इति सूत्रस्थञकारेण प्रत्याहाराश्रयणात्तयोर्लाभ इत्यवगमात्। न च 'कृञ्चे'ति चकारेणैवाऽनुप्रयोगोऽन्यस्य कथं न कल्प्यत इति वाच्यम्, धातोराम् स्यात्, अनुप्रयुज्यते च लिटपरः कृञित्यर्थसमर्कतया तस्योपक्षीणत्वात्। न च 'कृभ्वस्तियोगे' इत्यस्य 'कृञो द्वितीये'त्यस्य च सूत्रस्य मध्ये 'अभिविधौ सम्पदाचे'ति पठितम्, एवञ्च कृञ्प्रत्याहारे सम्पदोऽपि ग्रहणापत्तौ कथं भ्वस्त्योरेव ग्रहणं स्यादिति वाच्यम्, तस्याननिवतार्थत्वेनाऽनुप्रयोगासम्भवात्। नचाऽनुप्रयुज्यमानानां कृभ्वस्तीनामाम्प्रकृत्या कथमन्वय इति वाच्यम्, सामान्यविशेषभावाऽभ्युपगमेन दोषाभावात्। नचैवमपि येन कृञाऽन्यस्याऽनुप्रयोगः कल्प्यते

तस्य प्रयोजनमेव नास्ति 'स्वरित ञितः कर्त्रभिप्राये क्रियाफले' इत्यनेनैवात्मनेपद-विधानसिद्धेरिति वाच्यम् , कृञः परगामिनि क्रियाफले परस्मैपदवारणाय तस्याऽवश्यकत्वादिति दिक् ।

**आमो मकारस्य नेत्वम्**—ननु 'इजादेश्च गुरुमतोऽनृच्छः' इत्येतत्सूत्रविहिताऽऽम्घटकमकारस्य हल्त्वेन इत्संज्ञा स्यादिति चेद् ? न, आस्धातोः कास्धातोश्च 'दयायासश्च' 'कास्प्रत्ययादाममन्त्रे लिटि' इति आम्विधानसामर्थ्यात् । यद्यत्र मकारस्येत्संज्ञा स्यात्तदा आस्धातोः कास्धातोश्चाऽऽम्विधानं व्यर्थं स्यात्तत्रापीत्संज्ञाया दुर्वारत्वादिति तत्सामर्थ्यादित्संज्ञाऽभावकल्पनेन न प्रकृते काप्यापत्तिः । न च मित्त्वादन्त्यादचः परत्वसामर्थ्यादसंजातविरोधिन्यायेन सवर्णदीर्घस्यैव बाधोऽस्त्विति वाच्यम् । सवर्णदीर्घबाधापेक्षया इत्संज्ञाबाधस्यैव समुचितत्वात् । ननु 'कृञ्चानुप्रयुज्यते' इत्यतः कृञोऽनुवृत्त्यैव सिद्धे 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यत्रत्यकृञ्ग्रहणं फलाभावाद्व्यर्थं सञ्ज्ञापयति—भवत्यन्यस्याऽप्यनुप्रयोगः । तेन 'कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः' इत्यत्र कृशब्दमादाय 'कृञो द्वितीया' इत्येतद्घटकञकारेण कृञ् प्रत्याहाराश्रयणेन कृभ्वस्तीनामनुप्रयोगलाभः । तेषां कृभ्वस्तीनां क्रियासामान्यवाचकत्वेनाऽम्प्रकृतीनां क्रियाविशेषवाचित्वेन तदर्थयोरभेदान्वयः सामान्यविशेषयोर्घटो नीलघट इत्यादौ विधेयांशेऽधिकावगाहिशाब्दबोधस्य नवीनैरभ्युपगमात् । नचोक्तरीत्या कृभ्वस्तिलाभे सम्पदोऽपि प्रत्याहारान्तर्गतत्वेन लाभात्कुतो न प्रयोग इति वाच्यम् । तस्य तथात्वेऽपि अनन्वितार्थत्वेन अप्रयोगात् । तथा च–एधाञ्चक्रे इत्यादित एककर्तृकभूतानद्यतनपरोक्षकालिकवृद्ध्यभिन्नक्रियेति शाब्दबोधः ।

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य** ( ई० ४० )—अत्र 'अनुदात्तङित' इत्यत आत्मनेपदमित्यनुवर्तते । आम्प्रत्ययस्यात्मनेपदानर्हत्वात्प्रत्ययग्रहणाच्च आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । तथा च आम्प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यते । आम्प्रत्ययवदिति आम्प्रत्ययेन तुल्यमिति तृतीयान्ताद्वतिः । अनुप्रत्युज्यते इत्यनुप्रयोगः कर्मणि घञ् पञ्चम्यर्थे षष्ठी । एवञ्च आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यादित्यर्थः पर्यवसितो भवति । अत्र 'कृञ्' इति न प्रत्याहारग्रहणम् , 'अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहणमिति' भाष्यात् । आम्प्रत्ययवदिति ग्रहणात् परगामिन्यपि क्रियाफले कृञ् धातोरात्मनेपदं भवतीति विज्ञायते । अत

एव इन्दाञ्चकारेत्यादौ आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाभावात् परगामिनि क्रियाफले नानेनाऽऽत्मनेपदम्। इत्थञ्च—'एधाञ्चक्रे' इत्युदाहरणम्, 'इन्दाञ्चकार' इति प्रत्युदाहरणमिति बोध्यम्।

**'इन्दाञ्चकार' इत्यत्रापि कुतो न तङिति**—नन्विन्दाञ्चकारेत्यादौ परगामिनि क्रियाफले 'आम्प्रत्ययवत्' इति सूत्रेण मास्त्वात्मनेपदम् 'इदि परमैश्वर्ये' इति धातोः परस्मैपदित्वेनात्मनेपदाभावात्। आत्मगामिनि तु क्रियाफले 'स्वरितञित' इत्यात्मनेपदं दुर्वारम्। अस्य सूत्रस्य एधाञ्चक्रे इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतया तत्रात्मनेपदस्य निवारणे सामर्थ्याभावात् इति प्रष्टुराशयः। उत्तरयितुस्त्वयमाशयः—अस्मिन् सूत्रे 'पूर्ववत्सनः' इति पूर्वसूत्रात्पूर्ववदित्यनुवर्त्य 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्येकं वाक्यं, 'पूर्ववत्कृञोऽनुप्रयोगस्य' इति द्वितीयं वाक्यम्। तत्र पूर्ववदिति तृतीयान्ताद्वतिः। पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः। तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्यात् द्वितीयं वाक्यं नियमार्थं सम्पद्यते, पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति। एवञ्च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले 'स्वरितञित' इत्यात्मनेपदस्य निवृत्तिः क्रियते।

**'प्रत्यये किम्? बव्रश्च'**—अयम्भावः, ओव्रश्चू छेदने अस्माद्धातोर्लिटि णल् द्वित्वं 'लिट्यभ्यासस्य' इति अभ्यासरेफस्य सम्प्रसारणम् ऋकारः। उरत्। रपरत्वम्। हलादिः शेषः। 'बव्रश्च' इति रूपम्। 'उरत्' इत्यत्र अङ्गस्याधिकारो वर्तते। ततश्चाङ्गावयवाभ्यासर्कारस्याऽत्स्यात्प्रत्यये परे इति सूत्रार्थो भवति। एवञ्च त्त्वादेशः परनिमित्तो भवतीति वकारस्य सम्प्रसारणे कर्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति सूत्रेण ऋकारवृत्तिसम्प्रसारणत्वमकारे आनीय 'न सम्प्रसारणे सम्प्रसारणम्' इति सूत्रेण वकारस्य सम्प्रसारणं न भवति। यदि अङ्गेन प्रत्ययस्याक्षेपो न स्यात्तदा 'अचः परस्मिन्' इति सूत्राप्रवृत्त्या वकारस्य सम्प्रसारणं स्यादेव।

(१) **'एकाच उपदेशेऽनुदात्तात्'** (ई० ३९,४२,४५,४७,५६)—ननु ऊदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाव्यभिचारादेकाज्ग्रहणं मास्तु। 'उपदेशेऽनुदात्तात्' इत्येतावास्तु। एतावतैव कर्तृ चकृषे इत्यादाविड्निषेधसिद्धेरिति प्रष्टुराशयः। उत्तरदित्सोस्त्वयमाशयः। यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहणम्। न च कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः।

कृते द्वित्वेऽनेकाच्त्वेऽपि धातूपदेशे एकाच्त्वादिति वाच्यम् । 'श्तिपाशपाऽनुबन्धेन' इत्यादिकारिकया तन्निषेधात् । एवञ्च व्यर्थीभूतेनानेनैकाज्ग्रहणेनैव ज्ञाप्यते । न च श्तिपाशपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम् । एकदेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमतिङ्' इत्यादौ दृष्टत्वात् ।

( २ ) **'एकाच् उपदेशेऽनुदात्तात्'**—उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्द्धधातुकस्येण् न स्यादित्यर्थः । उदाहरणं यथा—कर्तुम्, गन्तुम् । पिपक्षति । बिभत्सति इत्यादि ।

तत्र कर्तुं, गन्तुमित्यत्र तुमुनि सति नित्स्वरेण सम्प्रत्युदात्तत्वेऽपि, ऊदृदन्तैरित्यादिनाऽजन्तेषु कृञो हलन्तेषु गमश्चानुदात्तत्वाऽनगमादिण्निषेधः । पिपक्षति, बिभत्सतीत्यादौ हि पक्तेर्विभेतेश्च सन्नन्तेऽनेकाच्त्वेऽपि पूर्वमेकाच्त्वादिण्निषेधः ।

ननु सूत्रे एकाज्ग्रहणाभावेऽपि ऊदृदन्तैरित्यादिना परिगणितानामेवानुदात्तोपदेशधातूनामेकाच्त्वाऽव्यभिचारात् कर्त्तुं चकृषे, गन्तुमित्यादाविण्निषेधसिद्धेः, एकाज्ग्रहणं व्यर्थमिति चेत् ? सत्यम्, यङ्लुकि 'चर्करिते'त्यादाविण्निषेधव्यावृत्त्यर्थन्तदावश्यकत्वात् । न च कृतेऽप्येकाज्ग्रहणे यङ्लुकि द्वित्वे कृतेऽनेकाच्त्वेपि धातुपदेशे एकाच्त्वस्य विद्यमानत्वेनेण्निषेधो दुर्वार एवेति वाच्यम्, प्राचीनैः—

> स्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
> यत्रैकाच् ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥

इति निबन्धनादिण्निषेधव्यावृत्तेः सुस्थत्वात् । नचैवं सत्यपि स्तिबादिनिर्दिष्टानां यङ्लुकि व्यावृत्तिः पाणिनेरसम्मतैवेति वाच्यम्, उक्तश्लोकसिद्धं सर्वमपि सूत्रे एकदेशानुमत्या एकाज्ग्रहणेनैव ज्ञापनात् अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्वेन तद्वैयर्थ्यं स्पष्टमेव । न च 'अवधीत्' इत्यत्र हनधातोर्लुङि 'हनो वध लिङि' 'लुङि चे' त्यनेन वधादेशे कृते इडागमो न स्यात् सम्प्रति अनेकाच्त्वेऽपि धातूपदेशे एकाच्त्वादिति वाच्यम्, सूत्रेऽच इत्यनेनैव एकाचकादिति सिद्धे एकग्रहणसामर्थ्यादुपदेशे सर्वत्र एकाजेव न तु कस्मिंश्चिदप्युपदेशेऽनेकाजित्यर्थकल्पनेनादोषात् ।

**एधाञ्चक्रे** ( ई० ४५ )—एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'एध् आम् कृ लिट्' इति जाते 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यात्मनेपदत्वात्

लिटः स्थाने तप्रत्यये 'लिटस्तझयोरेशिरेच्' इत्येनेन तस्यैशादेशे अनुबन्धलोपे 'एधाम् कृ ए' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे प्राप्ते तं परत्वाद्बाधित्वा 'इको यणचि' इति यणि प्राप्ते तं 'द्विर्वचनेऽचि' इति निषेधे पुनः प्रसङ्गविज्ञानात् 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे च कृते 'एधाम् कर् कृ ए' इति जाते 'हलादिः शेषः' इत्यनेन अभ्यासस्यान्त्यहलो लोपे 'कुहोश्चु' इत्यनेन कस्य चुत्वे 'एधाम् च कृ ए' इति दशायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'असंयोगाल्लिट्कित्' इति कित्वेन गुणनिषेधे 'इको यणचि' इति यणि मकारस्यानुस्वारे परसवर्णे च कृते 'एधाञ्चक्रे' इति सिद्धम् ।

**एधामास** ( ई० ३९, ४३, ४६ )—वृद्ध्यर्थक-एध-धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यनेनामि 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिटपरक 'अस्' इत्यस्यानुप्रयोगे लिटः स्थाने तिपि तस्य णलादेशे अनुबन्धलोपे द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'एधाम् अ अस् अ' इत्यवस्थायां सवर्णदीर्घं बाधित्वा 'अतो गुणे' इति पररूपे प्राप्ते 'अत आदेः' इत्यनेनाभ्यासस्यादेरतो दीर्घे सति 'एधामास' इति सिद्धम् । नन्वस्तेरनुप्रयोगे लिडादेशस्यार्धधातुकत्वात् 'अस्तेर्भू'रित्यार्धधातुके विहितो भूभावः कुतो नेति वाच्यम्, 'कृञ्चानुप्रयुज्यते' 'कृभुचानुप्रयुज्यते वा' इत्यनेनाऽपि एधांबभूवेतिसिद्धौ 'कृञ्' इति प्रत्याहारमाश्रित्य कृभ्वस्तीनामनुप्रयोगविधिसामर्थ्येन तदभावात् ।

**एधिताहे** ( ई० ५६ )—एधधातोर्लोटि तत्स्थाने आत्मनेपदे इटि 'टित आत्मनेपदानां टेरे' इति एत्वे तासिप्रत्यये 'आर्धधातुकस्येड् वलादेः' इति इटि 'एधि तास् ए' इति स्थिते 'ह एति' इति सूत्रेण तासः सस्य हकारे 'एधिताहे' इति सिद्धम् ।

**एधेरन्**—( ई० ५६ ) एध्धातोः 'विधिनिमन्त्रणे'ति लिङि तत्स्थाने झप्रत्यये 'झस्य रन्' इति झस्य रनादेशे सार्वधातुकसंज्ञायां शपि 'एध् अ रन्' इति स्थिते 'लिङः 'सीयुट्' इति सीयुडागमे अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'लोपो व्योर्वलि' इति यलोपे 'आद्गुणः' इति गुणे 'एधेरन्' इति ।

**एधिषीष्ट** ( इ० ४० )—एध्धातोराशीर्लिङि तत्स्थाने तप्रत्यये 'लिङः सीयुट् इति सीयुडागमे अनुबन्धलोपे 'सुट्तिथोः' इति सुडागमे 'लोपो व्योर्वलि'

इति यलोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इत्यत्र सार्वधातुकग्रहणानुवृत्त्या अत्र 'किदाशिषि' इत्यनेन आर्धधातुकत्वात् सलोपाभावे सीयुट्सुटोः प्रत्ययावयवत्वात् 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे उक्तं रूपं सिद्धम् ।

**ऐधिड्ढ्वम्** ( ई० ३६, ४१, ४५, ४७, ५४, ५६ )—एध धातोर्लुङि तत्स्थाने आत्मनेपदे ध्वमि मध्ये च्लिप्रत्यये तस्य 'च्लेः सिच्' इत्यनेन सिजादेशे अनुबन्धलोपे सिचः आर्द्धधातुकसंज्ञायाम् , 'आर्द्धधातुकस्येड्वलादेः' इत्यनेन इडागमेऽनुबन्धलोपे अडमपवाद्य 'आडजादीनाम्' इत्यनेनाडागमे 'आटश्च' इत्यनेन वृद्धौ, 'धि च' इत्यनेन सकारलोपे इटो लुप्तसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताऽङ्गत्वात् 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' इत्यनेन धस्य ढत्वे 'ऐधिड्ढ्वम्' इति सिद्धम् । केचित्त्वत्र इड् भिन्न एव इण् गृह्यते, उत्तरसूत्रे 'विभाषेटः' इत्यत्रेड्ग्रहणादिति मन्यन्ते । तथा च तन्मते हि प्रकृते इटः परत्वात् धकारस्य ढत्वाभावे 'ऐधिध्वम्' इत्येव रूपम् । अस्मिन् पदे धकारस्य 'अनचि च' इत्यनेन द्वित्वविकल्पाद्द्विधमेकधमिति रूपद्वयम् , एवं ढत्वे द्विढमेकढमिति रूपद्वयम् । रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च पूर्वप्रतिपादितानि चत्वारि रूपाणि जायन्ते, एवञ्च अष्टौ रूपाणि मिलित्वा सम्पद्यन्ते । उक्तवार्त्तिकेनैव मकारस्यापि द्वित्वविकल्पादुक्ताष्टरूपाणि एकमकाराणि द्विमकाराणि चेति षोडश रूपाणि भवन्ति । न च मस्येत्संज्ञा कथन्नेति वाच्यम् , 'न विभक्तौ तुस्माः' इति तन्निषेधात् ।

**पस्पर्धे** ( ई० ४४ )—'स्पर्ध' धातोर्लिटि तत्स्थाने तप्रत्यये तस्य एशादेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे प्राप्ते तमपवाद्य 'शर्पूर्वाः खयः' इत्यनेन अभ्यासे पकारस्य शेषे सति 'पस्पर्धे' इति सिद्धम् । न च 'नन्द्राः संयोगादयः' इत्यनेन रेफस्य द्वित्वनिषेधः स्यादिति वाच्यम् , द्वितीयैकाजवयवस्यैव तन्निषेधात् ।

**'आदेशश्चेह वैरूप्यसम्पादक एव गृह्यते, शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात्'**—'अत एकहल्मध्येऽनादेशादेर्लिटि' इति सूत्रेऽनादेशादेरिति पदे आदेश आदौ यस्य स आदेशादिः न आदेशादिरनादेशादिस्तस्येति समासे जाते आदेशपदेन यो हि वैरूप्यस्य रूपान्तरस्य सम्पादकः—कारकः, स एव

प्राह्यः। यथा—'जगाद' इत्यत्र गकारस्य जकारादेशो भवति। तत्र गकारस्यान्यद्रूपं जायते। तथा च दधधात्वादौ दकारस्य दकाररूपादेशे जातेऽपि एत्वाभ्यासलोपौ भवत एव। प्रमाणञ्चात्र 'न शसददवादिगुणानाम्' इति सूत्रे एत्वप्रतिषेधार्थं शसिदद्योः पाठः। अन्यथा आदेशपदेन यदि सामान्यादेशस्य ग्रहणं स्यात्तदा शसिदद्योरपि 'अभ्यासे चर्च' इति सूत्रेण शकारस्य शकाररूपादेशो दकारस्य च दकाररूपादेशो भवत्येवेति तत्रैत्वविधायकसूत्राप्रवृत्तौ निषेधकशास्त्रे तयोः पाठो निष्फल एव।

**देधे** ( ई० ४२,४४,४६ )—धारणार्थक-'दध्' धातोर्लिटि तत्स्थाने तप्रत्यये लिटि धातोरनभ्यासस्येत्यनेन द्वित्वेऽभ्याससंज्ञायाम्, 'असंयोगाल्लिट् कित्' इति सूत्रेण लिटः कित्वे 'अभ्यासे चर्चः' इत्यनेन जसां चरां च जशि चरि च, कृते 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्यनेन दकारात्परस्याकारस्य एत्वेऽभ्यासलोपे च जाते 'देधे' इति सिद्धम्। नन्वत्र 'अभ्यासे चर्च' इत्यनेन प्रकृतिजश्वरां प्रकृतिजश्वरादेशे लिण्निमित्तादेशत्वात् अनादेशादेरिति पर्युदासप्रतिषेधेन कथमेत्वाभ्यासलोपाविति चेत्? सत्यम्, वैरूप्यसंपादकादेशादेरेव पर्युदासप्रतिषेधात्, अन्यथा यथाकथञ्चिदादेशादेः पर्युदासः स्यात्तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चरजशोः शकारदकारादेशे सति आदेशित्वादेव एत्वाभ्यासलोपयोरभावसिद्धौ 'न शसददवादि-गुणानाम्' इति प्रतिषेधस्य वैयर्थ्यं स्यात्। अतो वैरूप्यसंपादक आदेशस्यैव प्रतिषेधेन दोषाभावात्।

**दददे** (ई० ४५)—दानार्थक-'दद्'धातोर्लिटि तत्स्थाने तप्रत्यये तस्य एशादेशे द्वित्वेऽभ्याससंज्ञायां हलादिशेषमपवाद्य 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्यनेन एत्वाभ्यासलोपयोः प्राप्तयोः 'न शशददवादिगुणानाम्' इत्यनेन तन्निषेधे हलादिशेषे 'दददे' इति सिद्धम्।

**अनुस्वदते** ( ई० ३९ )—आस्वादनार्थकानुपूर्वक-'ष्वद्'-धातोः 'धात्वादेः षः सः' इत्यनेन सत्वे लटि तत्स्थाने तप्रत्यये टेरेत्वे मध्ये शपि अनुबन्धलोपे 'अनुस्वदते' इति। नन्वत्रादेशसकारसत्वात्-'आदेशप्रत्यययोः' इत्यनेन षत्वापत्तिरिति चेत्? मैवम्, 'सात्पदाद्योः' इत्यनेन तन्निषेधात्।

**षोपदेशकारिका व्याख्या**—( ई० ४४ )—षोपदेशान् संगृह्णाति—'सेक्-सृप्-सृ-स्तृ-सृज्-स्तृ-स्त्याऽन्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः

ष्वष्क्-स्विद्-स्वद-स्वञ्ज-स्वप्-स्मिङः ॥' इति । सेगिति-दन्त्याजन्तसादयः एकाचः षोपदेशाः स्युरित्यन्वयः । दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, तथाविधः सः-सकारः आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यपरकोऽच्परकश्च यः सकारस्तदादय एकाचो धातव इदानीं कृतसत्वास्सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेनोपदिष्टा इति प्रत्येतव्या इत्यर्थः । नन्वेवं सेकृप्रभृतीनामपि षोपदेशत्वं स्यात्, आद्यानां चतुर्णामच्परकसादित्वाद-न्त्यानाञ्च त्रयाणां दन्त्यपरकसादित्वादतः सेकृप्रभृतीन्वारयति । नन्वेवमपि ष्वष्कादीनामसङ्ग्रहः स्यात्, एषु सकारस्य दन्त्याच्परकत्वाभावात्, अतस्तान्संगृह्णाति-ष्वष्केत्यादिना । अत्र दन्त्यपदेन केवलदन्त्यो गृह्यते, न तु दन्त्योष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् ।

**आतत्**—अत्धातोर्लङि तत्स्थाने तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'लुङ्लङ्' इति प्राप्तमटं बाधित्वा 'आडजादीनाम्' इत्याडागमे 'आटश्च' इति वृद्धौ 'इतश्च' इति तिपः इकारस्य लोपे 'आतत्' इति ।

**आतीत्**—( ई० ४४, ४६ )—अत्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'अत् स् त्' इति जाते 'आडजादीनाम्' इत्याटि अनुबन्धलोपे 'आटश्च' इति वृद्धौ सिचः सकारस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इतीटि अनुबन्धलोपे 'आत् इ स् त्' इति स्थिते तिपः तकारस्य 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इति ईडागमे अनुबन्धलोपे 'आत् इ स् ई त्' इति स्थिते 'इट ईटि' इति सलोपे 'आत् इ ई त्' इति दशायां सलोपस्य त्रैपादिकत्वेन 'पूर्वत्राऽसिद्धम्' इत्यासिद्धत्वेन दीर्घत्वाऽभावे प्राप्ते 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकेन सिज्लोपस्य असिद्धत्वाऽभावेन सवर्णदीर्घे 'आतीत्' इति सिद्धम् ।

**सिषेध** ( ई० ५६ )—षिध्धातोर्लिटि 'धात्वादेः षः सः' इति सत्वे लिटः स्थाने तिपि णलि द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'पुगन्त लघूपधस्य च' इति गुणे 'सिषेध' इति सिद्धम् ।

**सिषेधिथ**—षिध्धातोर्लिटः सिपिः 'धात्वादेः षः सः' इति सत्वे 'परस्मैपदानाम्-' इति सिपस्थलि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासावयव-

धकारस्य लोपे 'सिसिध् थ' इति जाते 'आदेशप्रत्यययोः' इति सस्य षत्वे 'लिट् च' इति थलः आर्धधातुकत्वात् तस्मिन् परे आर्धधातुकस्येड्वलादेः' इति थलः इटि अनुबन्धलोपे 'पुगन्त—' इति गुणे 'सिषेधिथ' इति ।

**निषेधति** ( ई० ४५ )—'नि' इत्युपसर्गपूर्वकात् षिध्धातोर्लटि 'धात्वादेः षः सः' इति षस्य सत्वे लटः स्थाने तिपि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे निसेधति इति स्थिते 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति सस्य षत्वे उक्तं रूपं सिद्धम् ।

**न्यषेधत्** ( ई० ३८, ४४ )—'नि' इत्युपसर्गात्षिध्धातोर्लङि तिपि अडागमे अनुबन्धलोपे यणि सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे 'प्राक्सितादड्व्यवायेऽपि' इति सस्य षत्वे 'इतश्च' इति तिप इकारलोपे उक्तं रूपं सिद्धम् ।

**न्यषेधीत्** ( ई० ४५ )—गत्यर्थक-नि-उपसर्गक-'षिध्' धातोः 'धात्वादेः षः सः' इत्यनेन सत्वे धातुत्वाल्लुङि तत्स्थाने तिपि अनुबन्धलोपे, अडागमे, यणि, मध्ये 'च्लि' प्रत्यये तस्य सिजादेशे अनुबन्धलोपे आर्धधातुकसंज्ञायाम्, 'आर्धकातुकस्येड्वलादेः' इत्यनेन इडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे 'पुगन्ते'ति गुणे कृते अकारेण व्यवहितत्वादिणः परत्वाभावात् 'आदेशप्रत्यययोः' इत्यनेन षत्वाप्रवृत्तौ 'प्राक्सितादडव्यवायेऽपि' इति सस्य षत्वे 'न्यषेधीत्' इति ।

**अखदीत्** ( ई० ४४ ) स्थैर्यहिंसार्थक-'खद'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'आर्धधातुकस्येड्वलादेः इत्यनेन इड़ागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे 'अतो हलादेर्लघोः' इत्यनेन वैकल्पिकवृद्धिविधानात्तदभावपक्षे 'अखदीत्' इति रूपं भवति । वृद्धौ तु—'अखादीत्' इति रूपम् । न च सवर्णदीर्घे कर्त्तव्ये सिज्लोपस्यासिद्धत्वं शङ्कयम्, 'सिज्लोप एकादेशे सिद्धो वाच्यः' इत्युक्तत्वात् ।

**णो नः** ( ई० ४५ )—धातोरादेर्णस्य नो भवति, यथा "णद अव्यक्ते शब्दे' अस्य धातोर्णस्य नत्वे 'नदति' इति रूपम् । 'धात्वादेः षः सः' इत्यतो 'धात्वादेः' इत्यनुवर्तते तेन 'अनती'त्यादौ न णत्वम् । अत्र के णोपदेशाः ? के वा तद्भिन्नाः ? इति संशये पाणिनेर्नियमस्यानुपलम्भादिदानीं केषां षोपदेशत्वमवधार्य उक्तसूत्रेण

नत्वं स्यादित्यतः पर्युदासमुखेन कौमुद्यामुक्तं ग्रन्थकृता-'णोपदेशास्त्वनर्द-नाटि-नाथ्-नन्द्-नक्क-नॄ-नृतः' इति । 'नर्द शब्दे' 'नट अवस्यन्दने' 'नाथृ-नाधृ याच्ञादौ' द्वितीयचतुर्थान्तौ, 'टुनदि समृद्धौ' 'नक्क नाशने' 'नॄ नये' 'नृती गात्र-विक्षेपे' एभ्योऽष्टभ्योऽन्ये णकारादिधातव इदानीं नकारादित्वेनाऽवलोक्यमाना अपि नत्वसम्पन्ननकारादितया णोपदेशा बोध्या इत्यर्थः । न चैतान्यपर्युदस्य णोपदेशत्व-मुक्तमित्यत्र किम्मानमिति वाच्यम्, 'नृतूनर्दनन्दनक्कनाट्नाथृनाधृनवर्जं णोपदेशा' इति भाष्यस्यैव मानत्वात् । केचित्तु = तवर्गचतुर्थान्तनाधतेर्नॄन्न्योश्च णोपदेशता-माहुस्तन्न, उक्तभाष्यविरोधात् । नचैवमप्यण्यन्तानां पर्युदासमध्ये नाटेः ण्यन्तस्य पर्युदासः कथमिति वाच्यम्, ण्यन्तनाटेः पर्युदासेन घटादेः 'नट नृत्ता'वित्यस्य णोपदेशार्थत्वात् । न च तथापि णकारमुपदिश्य किमर्थं नकारो विधीयते नकार एवोपदिश्यतामिति वाच्यम्, समासाऽसमासयोर्विशिष्य 'उपसर्गादसमासेऽपि' इत्य-नेन णोपदेशस्य धातोर्नस्य णत्वविधानेन णोपदेशस्य बोद्धुमावश्यकत्वात् ।

**'तस्मान्नुड् द्विहलः'**—'तस्मान्नुड् द्विहलः' इति सूत्रे ऋकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणे इद प्रमाणम्-'एओङ्' 'ऐऔच्' इति हि सूत्रभाष्ये 'लुडि्व-धिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम्' इति प्रतिपाद्य 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति समर्थितम् । इदमेव च तत्र मानम् । द्विहल्ग्रहणस्यानेकहलुपलक्ष-णत्वे च द्विग्रहणमेव प्रमाणम् । अन्यथा हल इत्येव विदध्यात् । आत, आट इत्यादौ एकहलधातुषु तु न दोषः 'अश्नोतेश्च' इति नियमात् ।

**आनर्द** ( ई० ४४ )—अर्दधातोर्लिटि तिपि तस्य 'परस्मैपदाना'मित्यादिना णलादेशे द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'अत आदेः' इत्यनेनाभ्यासस्यादेरतो दीर्घे 'तस्मान्नुड् द्विहलः' इत्यनेन नुडागमेऽनुबन्धलोपे 'आनर्द' इति सिद्धम् ।

**वव्रुके** ( ई० ४१,५३ )—आदानार्थक 'वृक्' धातोर्लिटि तत्स्थाने तप्रत्यये 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् उरदित्यत्वे हलादिशेषे 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वाल्लघूपधगुणाभावे तस्य 'लिटस्तझयोरे-शिरेच' इत्यनेन एशादेशेऽनुबन्धलोपे 'वव्रुके' इति सिद्धम् । न च कित्वात्पर-त्वाद् गुणे कृते रपरत्वे संयोगात्परत्वेन कित्वस्याऽनित्यत्वादुक्तरूपं न सिद्धयेदिति वाच्यम्, 'ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन' इत्यनेन पूर्वविप्रतिषेधेन' कित्वस्यैव प्रवृत्तावुक्तरूपसिद्धौ बाधकाभावात् ।

(१) **उवोख** ( ई० ४१,४५,५३ )—गत्यर्थक-उख्धातोर्लिटि तत्स्थाने तिपि तस्य 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इत्यनेन णलादेशे णलावितौ 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे अन्तरङ्गत्वात् सवर्णदीर्घे प्राप्ते 'वार्णादाङ्गं बलीयः' इति परिभाषया तं बाधित्वा लघूपधगुणे कृते 'उ-ओख अ' इत्यवस्थायाम् उवर्णस्य यणि प्राप्ते 'अभ्यासस्याऽसवर्णे' इत्यनेन उवङादेशे पररूपे कृते 'उवोख' इति सिद्धम्। ननु यदेव णलादेशो जातस्तदा तस्य पित्वेनाकित्वाल्ल घूपधगुणः कथन्नेति चेत्? मैवम्, द्विर्वचने चेति निषेधात्। नच कृते द्वित्वे लघूपधगुणेऽपि इजादिगुरुमत्वात् 'इजादेश्च गुरुमतोऽनृच्छः' इत्यनेनाम् कथन्नेति वाच्यम्, सन्निपातपरिभाषाविरोधात्। नच 'अचि श्नुधातुभ्रुवाम्' इत्यनेनैवोवङादेशे सिद्धे पुनरुक्तसूत्रेण विधानं व्यर्थमिति वाच्यम्, अजादौ परत एव तत्प्रवृत्तेः, अभ्यासस्याङ्गत्वाभावाच्चापि तदप्राप्तेरिति दिक्।

(२) **उवोख**—उख्धातोः 'परोक्षे लिट्' इति लिटि, तिपि, णलि, द्वित्वे, अभ्यासकार्ये कृते 'उ उख् अ' इति भूते 'पुगन्तलघूपधस्य च' इति गुणे 'अभ्यासस्यासवर्णे' इत्युवङि 'उवोख' इति जायते। न च अत्र इजादिगुरुमत्वात् आम् स्यादिति वाच्यम्। सन्निपातपरिभाषाविरोधात्। तथाहि- आर्धधातुकाव्यवहिताङ्गावयव इक् इत्याकारकसम्बन्धेन जायमानो गुणादेशो गुरुमत्वेन इगार्धधातुकयोर्मध्ये पतिष्यतः आम्प्रत्ययस्य निमित्तं न स्यात्।

(१) **ऊखतुः**—'उख्धातोः 'परोक्षे लिट्' इति लिटि, लिटस्तसि, 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इत्यनेन अतुसि द्वित्वे अभ्यासकार्ये उ उख् इति स्थितेऽङ्गाधिकारत्वात् 'वार्णादाङ्गं बलीयः' इति परिभाषया 'पर्जन्यवल्लक्षणप्रवृत्तिर्भवति' इति युक्त्या पूर्वं ह्रस्वो भवति ततो दीर्घः। दीर्घे च कृते 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायात् पूर्वान्तवद्भावेनैकादेशे प्राप्तो ह्रस्वो न भवति। परत्वाच्चेत्यस्यायमाशयः—'अकः सवर्णे दीर्घः' इति सूत्रस्य परत्वान्नाम परकालेन प्रवृत्तत्वात्। तथा च 'हलादिः शेषः' इति सूत्रात्पूर्वं ह्रस्वस्ततः खलोपस्ततो दीर्घः। एवञ्चैकस्मिन् काले ह्रस्वदीर्घयोः प्रवृत्त्यभावेन 'वार्णादाङ्गम्' इति परिभाषाया विषय एव नास्तीति दीर्घे कृते 'लक्ष्ये लक्षणम्' इति न्यायाद्ध्रस्वाभावः।

(२) **ऊखतुः** ( ई० ३७ )—उख्-धातोर्लिटि तत्स्थाने तसि तस्य अतुसादेशे 'असंयोगाल्लिट् कित्' इत्यनेन अपित्वात्कित्वेन लघूपधगुणाभावे, द्वित्वे, अभ्यास-

संज्ञायां हलादिशेषे पर्यन्यवल्लक्षणप्रवृत्त्या ह्रस्वे सवर्णपरकत्वात् 'अभ्यासस्याऽसवर्णे' इत्यनेन इयङभावे सवर्णदीर्घे रुत्वे विसर्गे 'ऊखतुः' इति सिद्धं भवति । नन्वत्रोकारस्य सवर्णदीर्घसम्पन्नस्य एकादेशतया पूर्वान्तवद्भावेनाभ्याससम्बन्धित्वात् सकृत्प्रवृत्तोऽपि 'ह्रस्वः' इति ह्रस्वः पुनरपि कथं न प्रवर्त्तत इति चेत् ! मैवम्, 'लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते' इति न्यायेन पर्यन्यवल्लक्षणप्रवृत्त्या पूर्वं प्रवृत्तस्य ह्रस्वस्य दीर्घे कृते पुनः प्रवृत्त्यभावात् । न च वर्णमात्रापेक्षत्वेनान्तरङ्गत्वात्प्रथमं सवर्णदीर्घस्यैव प्रवृत्तिरिति ह्रस्वस्य कथं प्रथमं प्रवृत्तिरिति वाच्यम्, 'वार्णादाङ्गं बलीयः' इति परिभाषया बहिरङ्गस्यापि ह्रस्वस्य प्रथमं प्रवृत्तेः । अभ्यासविकारेषु परस्परं बाध्यबाधकभावाऽभावेन युगपदेव हलादिशेषे ह्रस्वे च कृते 'पूर्वपूर्वमन्तरङ्गं परं परं बहिरङ्गम्' इति ह्रस्वस्यैवान्तरङ्गत्वावगमाच्च ।

**आनृजे** ( ई० ३७, ४१, ४६, ४७, ५२ )—ऋज्धातोर्लिटि तत्स्थाने आत्मनेपदे तप्रत्यये 'असंयोगाल्लिट्कित्' इति कित्वात् 'क्ङिति च' इति गुणनिषेधे 'लिटस्तझयोरेशिरेच्' इति तस्य एशादेशे अनुबन्धलोपे द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इति अत्वे रपरत्वे हलादिशेषे 'अत आदेः' इत्यभ्यासस्यातो दीर्घे 'तस्मान्नुड् द्विहलः' इति नुटि अनुबन्धलोपे 'आनृजे' इति सिद्धम् । नचात्र द्विहल्त्वाभावात् कथं नुडिति वाच्यम्, 'नुडविधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते' इति वार्तिकोक्तत्वेन द्विहल्त्वात् ।

**अम्रुचत्** ( ई० ३८ )—म्रुच्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे मध्ये-च्लौ तस्य सिचादेशे प्राप्ते तम्प्रबाध्य 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति विभाषया च्लेरङि ङित्वाल्लघुपधगुणाभावे 'अम्रुचत्' इति । अङभावे तु च्लेः सिचादेशे सस्य इटि तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे पुगन्तेति गुणे 'अम्रोचीत्' इति ।

**अग्रुचत्** ( ई० ३८ )—ग्रुच् धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'लुङ्-लङ्–' इत्यडागमे मध्ये च्लिप्रत्यये तस्य 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इत्यनेनाङि सति ङित्वाल्लघूपधगुणाभावे 'अग्रुचत्' इति सिद्धम् । अङभावे तु—च्लेः सिजादेशे अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे कृते 'इट ईटि' इति सलोपे सवर्णदीर्घे लघूपधगुणे 'अग्रोचीत्' इति सिद्धम्भवति ।

**अग्लुचत्**—'ग्लुच्' धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे प्राप्ते तमपवाद्य 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इत्यनेन विकल्पेन अङि ङित्वाल्लघूपगुणाभावे सति 'अग्लुचत्' इति सिद्धम्। पक्षे सिजादेशे द्वयोरपीटोः सत्योः सलोपादिके 'अग्लोचीत्' इति रूपं सिद्धम्।

**आञ्छ** (ई० ३६)—आयामार्थक, इकारेत्संज्ञक-आछ् धातोर्लिटि तिपि तस्य णलादेशेऽनुबन्धलोपे 'इदितो नुम् धातोः' इत्यनेन नुमागमे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे, अभ्याससंज्ञायाम् 'हलादिः शेषः' इत्यनेन हलादिशेषे 'ह्रस्वः' इत्यनेनाभ्यासह्रस्वे, अ आञ्छ अ, इति स्थिते 'अकः सवर्णे दीर्घः' इत्यनेन दीर्घे 'आञ्छ' इति सिद्धम्। ननु सवर्णदीर्घमपवाद्य 'अत आदेः' इत्यनेनाभ्यासस्यादेरतो दीर्घे 'तस्मान्नुड् द्विहलः' इत्यनेन नुट् कथन्नेति चेत्? मैवम्, तत्र तपरकरणेन स्वाभाविकह्रस्वाकारस्यैव ग्रहणेन दीर्घाऽभावान्नुटोऽप्राप्तेः। यदि तु तपरकरणं फलाभावन्मुखसुखार्थमिति विभाव्यते तदा नुटि सति 'आनाञ्छे'ति रूपमिति विभावनीयम्।

**वेञ् धातोर्लिट्येकवचने** (ई० ४५)—उवाय, ऊवे, ऊये, ववौ, ववे, इति चत्वारि रूपाणि। तथाहि—ञकारेत्संज्ञक-तन्तुसन्तानार्थक 'वे'-धातोर्लिटि तत्स्थाने तिपि तस्य 'परस्मैपदाना'मित्यादिना णलादेशेऽनुबन्धलोपे 'वेञो वयिः' इत्यनेन वैकल्पिके वयादेशे द्वित्वेऽभ्याससंज्ञायां यजादित्वादकिति लिटि परे 'लिट्यभ्यासस्योभयेषाम्' इत्यनेन वकारस्य सम्प्रसारणे पूर्वरूपे 'अत उपधायाः' इत्यनेनोपधावृद्धौ सत्याम् 'उवाय' इति सिद्धम्। न च यस्यैव सम्प्रसारणं कुतो न विहितमिति वाच्यम्, तस्य 'लिटि वयो यः' इत्यनेन निषेधात्। ननु वयादेशाऽभावेऽपि द्वित्वेऽभ्यासस्य सम्प्रसारणे 'अचो ञ्णिति' इति वृद्धौ आयादेशे उक्तरूपं सिद्धमेवेति चेत्? सत्यम्, 'ऊयतुः' इत्याद्यर्थमावश्यकत्वेन पूर्वमुपनिबद्धत्वादेवात्र वयादेश इत्यभ्युपगमात्। आत्मनेपदे तु—लिटः स्थाने तप्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशेऽनुबन्धलोपे 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन यस्य सम्प्रसारणे पूर्वरूपे ततो द्वित्वेऽभ्याससंज्ञायां हलादिशेषे सवर्णदीर्घे 'वश्चाऽन्यतरस्यां किति' इत्यनेन यस्य विकल्पेन वत्वे 'ऊवे' इति। वत्वाऽभावे 'ऊये' इति। यस्य सम्प्रसारणन्तु न भवति—'लिटि वयो यः' इत्यनेन निषेधात्। न चात्र वयेरञित्वात्कथमुभयपदित्वमिति वाच्यम्, स्थानिवद्भावेन ञित्वमादाय विधानात्। वया-

देशाऽभावे यजादित्वात् 'लिट्यभ्यासस्योभयेषाम्' इत्यनेन 'वचिस्वपि यजादीनां किति' इत्यनेन च सम्प्रसारणे प्राप्ते 'वेञः' इत्यनेन तन्निषेधे 'आदेच उपदेशेऽशिति' इत्यनेनात्वे द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'आत औ णलः' इत्यौत्वे 'वृद्धिरेची'ति वृद्धौ 'ववौ' इति । आत्मनेपदे तु आल्लोपे साते 'ववे' इति रूपम् ।

**विव्युः** ( ई० ५३, ५४ )—गतिक्षेपणार्थक-'अज्'-धातोर्लिटि तत्स्थाने झिप्रत्यये तस्य 'परस्मैपदाना'मित्यादिना उसादेशे 'अजेर्व्यघञपोः' इत्यनेनाजेर्वीभावे कृते 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यनेन प्राप्तियङमपवाद्य 'एरनेकाऽचोऽसंयोगपूर्वस्य' इत्यनेन यणि सस्य रुत्वे विसर्गे कृते 'विव्युः' इति सिद्धम् । नचात्र द्वितीयवकारस्य हल्परकत्वात् 'उपधायाञ्च' इत्यनेनेकारस्य दीर्घः कुतो नेति वाच्यम्, ईकारस्थानिकस्य यस्य 'अचः परस्मि'न्नित्यनेन स्थानिवद्भावेन तस्य हल्परकत्वाऽभावात् । न च दीर्घविधौ 'न पदान्ते'ति निषेधः स्यादिति वाच्यम्, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्तेः ।

**विव्यतुः** ( ई० ३७, ३९, ४१, ४२, ४४, ५३ )—अज्धातोः 'परोक्षे लिट्' इति लिटि, 'लिट् च' इति आर्धधातुकसंज्ञायाम् 'अजेर्व्यघञपोः' इति वीभावे लिटोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासकार्ये च कृते 'असंयोगाल्लिट् कित्' इति लिटः कित्त्वाद्गुणाभावे इयङपवादे 'एरनेकाच' इति यणि 'विव्यतुः' इति रूपम् । नन्वत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वात् 'उपधायाश्च' इति इकारस्य दीर्घः स्यादिति चेद् ? न, ईकारस्थानिकस्य यकारस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन हल्परत्वाभावात् । न च 'न पदान्त' इति स्थानिवद्भावस्य निषेधः स्यादिति शङ्क्यम्, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्तेः ।

**अजन्तोऽकारवान्वा**—१. 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' २. 'अचस्तास्वत्थल्यनिटो नित्यम्' ३. 'उपदेशेऽत्वतः' ४. 'ऋतो भारद्वाजस्य' इति सूत्रचतुष्टयानां प्रवृत्तिः संक्षेपेण वाचयति—'अजन्ते'ति । यो धातुः ऋदन्तभिन्नोऽजन्तः ( पा, या, वादि ) ह्रस्वाऽकारवान् वा ( पचादि ) तासौ नित्याऽनिट्, सोऽयं थलि विकल्पितेट्कः । तेन 'पपिथ–पपाथ, पेचिथ–पपक्थ, इत्यादि रूपाणि भवन्ति । 'ऋदन्त ईदृक्'—'इदृक्' इत्यस्य तासौ नित्यानिट् इत्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् स थलि नित्यानिट् इत्यर्थः । ( 'अचस्तास्वत्थल्यनिटो नित्यम्' इति पाणिनिमते, 'ऋतो

भारद्वाजस्य' इति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः ) तेन चकर्थ, जहर्थ इत्यादि रूपाणि भवन्ति। क्रादन्यः—कृसृभृवृस्तुद्रुस्रुश्रुव्यतिरिक्तो धातुः लिटि नित्यं सेडित्यर्थः। ( क्राद्यष्टभ्य एव परस्य लिटि नेडिति 'कृसृभृवृ' इति सूत्रेण नियमितत्वादिति भावः ) तेन पेचिव, पेचिम। जह्रिव, जह्रिम, इत्यादि रूपाणि भवन्ति।

**विवयिथ** ( ई० ४६ )—गतिक्षेपणार्थक-'अज्'-धातोर्लिटि तत्स्थाने सिपि 'परस्मैपदाना' मित्यादिना तस्य णलादेशेऽनुबन्धलोपे वलादावार्धधातुके विकल्पेन 'अजेर्व्यघञपोः' इत्यनेन अजेर्वी आदेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'आर्धधातुकस्येड्वलादेः' इत्यनेनेडागमे प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन तन्निषेधे 'ऋतो भारद्वाजस्य' इति नियमेन वैकल्पिकेडागमे गुणेऽयादेशे च कृते विवयिथ' इति सिद्धम्। इडभावे तु—'विवेथ' इति रूपम्।

**वीयात्** ( ई० ४० )—अज्धातोराशिषलिङि तिपि अनुबन्धलोपे 'लिङाशिषि' इति लिङः आर्धधातुकत्वात् 'अजेर्व्यघञपोः' इति अजेर्वीभावे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमे अनुबन्धलोपे 'स्कोरिति सलोपे 'वीयात्' इति सिद्धम्।

**अकटीत्** ( ई० ४४ )—कट्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अकट् स् त्' इति जाते सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य ईटि च जाते अनुबन्धलोपे 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायां 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इति तन्निषेधे 'इट ईटि' इति सिचः सस्य लोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अकटीत्' इति सिद्धम्।

**तितिपिषे** ( ई० ३७ )—क्षरणार्थक-ऋकारेत्संज्ञक-तिप्-धातोर्लिटि तत्स्थाने आत्मनेपदे थास्प्रत्यये तस्य 'थासः से' इत्यनेन से आदेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे, अभ्याससंज्ञायां हलादिशेषे, आर्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे सस्य षत्वे 'तितिपिषे' इति सिद्धम्।

**तिप्सीष्ट** ( ई० ३६,४५ )—क्षरणार्थक ऋकारेत्संज्ञक तिप् धातोराशीर्लिङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इत्यनेन सीयुडागमे अनुबन्धलोपे 'सुट् तिथोः' इत्यनेन सीयुडागमे अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इत्यनेन लघूपधगुणे प्राप्ते 'लिङ्सिचावात्मनेपदेषु' इत्यनेन कित्वात्तन्निषेधे 'आदेशप्रत्यययोः' इत्यनेन षत्वे ष्टुत्वे च 'तिप्सीष्ट' इति रूपं निष्पन्नम्।

**त्रेपे** ( ई० २८,४४ )—त्रप्धातोर्लिटि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिट्-स्तझयोरेशिरेच्' इत्यनेन एशादेशे द्वित्वेऽभ्याससंज्ञायां 'तॄफलभजत्रपश्च' इत्यनेन एत्वाभ्यासलोपयोः कृतयोः 'त्रेपे' इति । 'अत एकहल्मध्ये' इत्यनेन एत्वा-भ्यासलोपौ तु न, संयुक्तहल्मध्यस्थत्वात् ।

**त्रेपिरे** ( ई० ५६ )—त्रप्धातोर्लिटि प्रथमपुरुषबहुवचने रूपम् । साधन-प्रकारस्तु पूर्ववज्ज्ञेयम् ।

**उत्तम्भते** ( ई० ३७, ३९ )—प्रतिबन्धार्थक इकारेत्संज्ञक-उदुपसर्गक 'ष्टभ्' धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये, 'धात्वादेः षः सः' इत्यनेन षकारस्य सकारे 'निमित्तापाये नैमित्तिकस्याऽप्यपायः' इति परिभाषया ष्टुत्वनिमित्तकषकार-निवृत्तौ टकारस्यापि निवृत्तौ सत्याम् 'उदः स्थास्तम्भोः पूर्वस्य' इत्यनेन पूर्वसवर्णे सकारस्य थकारे, इदित्वात् 'इदितो नुम् धातोः' इत्यनेन नुमि अनुबन्धलोपे नकारस्यानुस्वारे परसवर्णे च कृते थकारस्य 'खरि च' इत्यनेन चर्त्वे 'टित आत्म-नेपदानां टेरे' इत्यनेन टेरेत्वे 'उत्तम्भते' इति सिद्धम् ।

**विस्तम्भते** ( ई० ३८,४५,४७ )—प्रतिबन्धार्थक-इकारेत्संज्ञक-व्युपसर्गक-'ष्टभ्' धातोः 'धात्वादेः षः सः' इति षस्य सत्वे निमित्तस्य षस्य निवृत्तौ नैमित्तिकस्य टस्यापि निवृत्तौ धातुत्वाल्लटि तत्स्थाने आत्मनेपदे तप्रत्यये शपि इदित्वान्नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे टेरेत्वे 'विस्तम्भते' इति सिद्धम् । न चात्र 'स्तम्भेः' इत्यनेन षत्वं कुतो नेति वाच्यम्, 'स्तन्भुस्तुन्भुस्कन्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च' इति सूत्रे निर्दिष्टस्यैव प्रतिपदोक्तस्य षत्वविधौ ग्रहणात्, न च तत्र किं मानमिति वाच्यम्, 'उदः स्थास्तम्भोः पूर्वसवर्णः' इत्यत्र पवर्गीयोपधपाठस्यैव मानत्वात्, माधवमते 'स्तन्भेः' इति तवर्गीयोपधपाठस्यापि मानत्वात् । यद्यत्र स्वाभाविक एव टकारो न तु ष्टुत्वसम्पन्न इति विभाव्यते तदा 'विष्टम्भते' इति रूपं भवति ।

**जम्भते**—( ई० ५४ )—ईकारेत्संज्ञकजभधातोर्लटि आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'रधिजभोरचि' इति नुमि अनुस्वारे परसवर्णे च कृते 'टित आत्मनेपदानां टेरे' इति एत्वे 'जम्भते' इति सिद्धम् ।

**कादीनां चतुर्णां ग्रहणं नियमार्थम्**—( ई० ३६, ४०, ५४ ) ननु 'कृसृभृ' एषां त्रयाणामनुदात्तत्वात् 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन वृत उदात्त-

त्वात् 'असुकः किति' इत्यनेन थलोऽकित्वात् 'असुकः किति' इत्यस्याप्रवृत्त्या 'ववर्थ' इति वेदे निर्देशाच्च सर्वत्रैवेण्निषेधे सिद्धे चतुर्णां ग्रहणं व्यर्थं सत् 'एकाच उपदेशेऽनुदात्तात्' इति प्रकृत्याश्रयेण 'असुकः किति' इति प्रत्ययाश्रयेण च लिटीण्निषेधश्चेत्तर्हि क्रादिभ्यश्चतुर्भ्य एवेति नियमयति । वृञस्तु वेदे एवेति च । तेनान्येषां धातूनां लिटीट्, लोके 'ववरिथ' इति च फलद्वयं सिद्धयति । स्त्वादीनां चतुर्णां ग्रहणं तु विधित्वसम्भावनया भारद्वाजमतेन ऋदन्तातिरिक्तस्त्वादीनां थलीडागमः प्राप्नोति तन्निषेधार्थम् । वमादिषु क्रादिनियमेन प्राप्तस्येडागमस्य निषेधार्थञ्चेति विध्यर्थमेव । तथाहि—क्रादिनियमात् क्राद्यन्येषां धातूनां लिटीट्प्राप्तौ अजन्तानाम् 'अचस्तास्वत्थल्यनिटो नित्यम्' इत्यनेन थलीण्निषेधे सिद्धे 'ऋतो भारद्वाजस्य' इति सूत्रं व्यर्थं सत् अजन्तानामकारवताञ्च थलीण्निषेधश्चेत्तर्हि ऋदन्तानामेवेति सामान्यापेक्षया नियामकम् । तेन थलि ऋदन्तादन्येषां धातूनां भारद्वाजमतेनेटि, अन्येषामाचार्याणां मते इडभावे च पेचिथ, पपक्थ, विवयिथ, विवेथेत्यादिस्थलेषु द्वे द्वे रूपे सिध्यतः । न च भारद्वाजनियमेन स्त्वादीनामपि थलीट् स्यादिति वाच्यम् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति परिभाषया 'अचस्तास्वत्थल्यनिटो नित्यम्' 'उपदेशेऽत्वतः' इति सूत्रद्वयेन प्राप्तस्यैवेण्निषेधस्य भारद्वाजनियमस्य निवर्तकत्वात् । क्रादिनियमेन स्त्वादिग्रहणम् 'अचस्तास्वत्' इति 'उपदेशेऽत्वतः' इति सूत्रद्वयञ्चेण्निषेधार्थं वर्तते । तथा च–यथा भारद्वाजनियमेन ऋदन्तातिरिक्तधातुषु सूत्रद्वयं न प्रवर्तते, तथैव स्त्वादिग्रहणमपि न प्रवर्ततामिति न शङ्क्यम् । 'अनन्तरस्य' इति न्यायादित्यलम् ।

**अगादीत्**—गद्धातोर्लुङस्तिपि 'इतश्च' इतीकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'आर्धधातुकं शेषः' इत्यनेन सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन सस्य इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तकारस्य ईडागमे 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्याऽसिद्धत्वाभावेन सवर्णदीर्घे 'अतो हलादेर्लघोः' इति वृद्धौ 'अगादीत्' इति । वृद्ध्यभावे 'अगदीत्' इति ।

**प्रणदति**—प्रोपसर्गात् णद्धातोर्लटि 'णो नः' इति णस्य नत्वे लटस्तिपि शपि 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वे तत्सिद्धिः ।

**नेदतुः**—णद्धातोर्लिटस्तसि 'णो नः' इति धातोर्णस्य नत्वे 'परस्मैपदानाम्' इति तसोऽतुसादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यन्त्यहलो लोपे 'न नद् अतुस्' इति स्थिते 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वेऽभ्यासलोपे सस्य रुत्वे विसर्गे 'नेदतुः' इति सिद्धम् ।

**नेदिथ**—णद्धातोर्लिटि 'णो नः' इति धातोर्नस्य णत्वे लिटः सिपो थलि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां हलादिशेषे 'आर्धधातुकस्येड्वलादेः' इतीटि 'थलि च सेटि' इति एत्वाऽभ्यासलोपे 'नेदिथ' इति ।

**चुच्योत**—'इर इत्संज्ञा वाच्ये'ति इरित्संज्ञक श्च्युत्धातोर्लिटि तिपि णलि द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति सूत्रं प्रबाध्य 'शर्पूर्वाः खयः, इत्यनेन अभ्यासस्य शर्पूर्वस्य खयः ('च्' इत्यस्य) शेषे अन्यस्य हलः ('श्—य्' इत्यनयोः) लोपे 'पुगन्तलघूपधस्य च' इति गुणे उक्तं रूपं सिद्धम् ।

**आनर्च**—अर्च् धातोर्लिटस्तिपि 'परस्मैपदानाम्' इति तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति हलो लोपे 'अ अर्च् अ' इति स्थिते 'अत आदेः' इत्यनेन अभ्यासाकारस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुटयनुबन्धलोपे 'आनर्च' इति ।

**ववनतुः**—वन्धातोर्लिटि तसि 'परस्मैपदानाम्—' इति तसोऽतुसि 'लिटि 'धातोरि'ति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वाऽभ्यासलोपे प्राप्ते 'न शसददवादिगुणानाम्' इति निषेधे सस्य रुत्वे विसर्गे 'ववनतुः' इति सिद्धम् ।

**चिक्षयिथ, चिक्षेथ**—क्षिधातोर्लिटि तत्स्थाने सिपि 'परस्मैपदानामि'ति सिपः स्थाने थलादेशे अनुबन्धलोपे 'क्षि थ' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासादिकार्ये 'चि क्षि थ' इति स्थिते 'क्षिधातोरजन्तत्वात् तासौ नित्यानिट्कत्वाच्च 'ऋतो भारद्वाजस्य' इति भारद्वाजमते इटि अनुबन्धलोपे 'अचि श्नुधातुभ्रुवाम्' इति इयङि 'चिक्षयिथ' इति । इडभावपक्षे गुणे 'चिक्षेथ' इति सिद्धं रूपं भवति ।

**क्षीयात्**—क्षिधातोराशिषि लिङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटयनुबन्धलोपे 'क्षि यास्त्'

इति दशायां 'क्डिाशिषि' इति यासुटः कित्वेन 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'क्षीयात्' इति सिद्धम्।

**अक्षैषीत्**—क्षिधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे मध्ये च्लौ तस्य सिचि इचि गते 'अक्षि स् त्' इति स्थिते 'अस्ति सिचोऽपृक्ते' इति ईटि अनुबन्धलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेशप्रत्यययोः' इति षत्वे 'अक्षैषीत्' इति जातम्।

**क्राम्यति**—क्रम्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इत्यनेन श्यनि अनुबन्धलोपे 'क्रमः परस्मैपदेषु' इति दीर्घे 'क्राम्यति' इति। श्यनोऽभावे शपि 'क्रामति' इति च सिद्धं भवति।

**क्रमिता**—क्रम्धातोर्लुटि तिपि 'स्यतासी लृलुटोः' इति तासि प्रत्यये 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति इटि अनुबन्धलोपे 'लुटः प्रथमस्ये'ति तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे उक्तं रूपं सिद्धम्।

( स्नुक्रमोः सेट्त्वात् 'आर्धधातुकस्येड्वलादेः' इति इट् सिद्धेः 'स्नुक्रमोरि'ति पुनरिड्विधानं नियमार्थमिति न विस्मर्तव्यम्। )

**गोपायाञ्चकार, जुगोप** ( ई० ५६ )—गुप्धातोः 'परोक्षे लिट्' इति लिटि प्राप्ते तं प्रबाध्य 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति नित्यम् आयप्रत्यये प्राप्ते तम्बाधित्वा 'आयादय आर्धधातुके वा' इति विकल्पेन आयप्रत्यये कृते तस्यार्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लिटि 'कास्यनेकाच आम् वक्तव्यः' इत्याम्प्रत्यये आमो मकारस्येत्संज्ञायां लोपे च कृते 'लिटि आस्कासोराम्विधानान्मकारस्येत्वाभावेन लोपाभावे 'गोपाय आम् लिट्' इति स्थिते आम्प्रत्ययस्यार्धधातुकसंज्ञायाम् 'अतो लोपः' इत्यल्लोपे 'गोपाय् आम् लिट्' इति जाते 'आमः' इति लिटो लुकि लिटः कृत्वात्प्रत्ययलक्षणेन गोपायामित्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'कृन्मेजन्तः' इति अव्ययत्वात् 'अव्ययादाप्सुपः इति तस्यापि लुकि गोपायामित्यवशिष्टे 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'गोपायाम् कृ लिट्' इति जाते लिटस्तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे 'गोपायाम् कृ कृ अ' इति भूते 'पूर्वोऽभ्यासः' इति पूर्वस्य कृञोऽभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य

अकारे 'उरण् रपरः' इति रपरे च कृते 'गोपायाम् कर् कृ अ' इति जाते 'हलादिः शेषः' इति रलोपे 'कुहोश्चुः' इत्यनेन अभ्यासककारस्य चुत्वेन चकारे मस्य पदान्तत्वादनुस्वारे परसवर्णे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे च कृते 'गोपायाञ्चकार' इति । आयप्रत्ययाभावे 'जुगोप' इपि च सिद्धं रूपं भवति ।

**जुगोपिथ**—गुप्धातोरायप्रत्ययाभावपक्षे लिटि तत्स्थाने सिपि सिपस्थलादेशे अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अन्त्यहलो लोपे 'कुहोश्चुः' इति चुत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'स्वरतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिके इडागमे अनुबन्धलोपे 'जुगोपिथ' इति । इडभावपक्षे 'जुगोप्थ' इति च सिद्धं भवति ।

**अगोपायीत्** ( ई० ४०, ४६, ४४ )—गुप्धातोः 'आयादय आर्धधातुके वा' इत्यायप्रत्यये 'पुगन्ते'ति गुणे 'गोपाय' इति, तस्मात् 'सनाद्यन्ता धातवः' इति धातुत्वाल्लुङि 'लुङ्लङ्' इत्यडागमे लुङः स्थाने तिपि मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे तस्य 'अस्तिसिचोऽपृक्ते' इति ईडागमे अनुबन्धलोपे 'अतो लोपः' इत्यल्लोपे 'इट ईटि' इति सलोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अगोपायीत्' इति सिद्धम् ।

**अगोपीत्**—गुप्धातोरायप्रत्ययाऽभावपक्षे लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'अगुप् त्' इति स्थिते 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'अगुप् स् त्' इति जाते 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विभाषया इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि अनुबन्धलोपे 'अगुप् इ स् ई त्' इति स्थिते 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अगुप् ई त्' इति दशायां 'वदव्रजहलन्तस्याचः' इति वृद्धौ प्राप्तायां 'नेटि' इति निषेधे 'पुगन्तलघूपधस्य च' इति गुणे 'अगोपीत्' इति । इडभावपक्षे 'वदव्रजे'ति वृद्धौ 'अगौप्सीत्' इति च सिद्धं भवति ।

**अगौप्ताम्**—गुप्धातोर्लुङि प्रथमपुरुषद्विवचने आयप्रत्ययपक्षे 'अगोपायिष्टाम्' इति । आयप्रत्ययाऽभावपक्षे 'स्वरतिसूती'ति इटि 'अगोपिष्टाम्' इति । इडभावपक्षे 'अगौप्ताम्' इति । तथाहि—लुङः स्थाने तसि तसस्तामादेशे 'लुङ्ल-

ङे'त्यडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अगुप् स् ताम्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'झलो झलि' इति सलोपे 'अगौ-प्ताम्' इति सिद्धम् ।

**धूपायाञ्चकार** ( ई० ४० )—सन्तापार्थक-धूप-धातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति सूत्रेण आयप्रत्यये धूपायेत्यस्य सनाद्यन्तेति धातुसंज्ञायां 'कास्प्रत्ययादाममन्त्रे लिटि' इति सूत्रस्थ 'कास्यनेकाच आम्वक्तव्यः' इति वार्तिकेन आम्प्रत्यये 'अतो लोपः' इत्यनेनाल्लोपे 'आमः' इति सूत्रेण लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिटपरक-'कृ'-इत्यस्यानुप्रयोगे द्वित्वादिके कृते 'धूपायाञ्चकार' इति सिद्धम् ।

**पणायति'** ( ई० ३९, ४२ )—व्यवहारस्तुत्यर्थक-'पण्'-धातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यनेन आयप्रत्यये पणायेत्यस्य 'सनाद्यन्ताधातवः' इति धातुसंज्ञायां लटि तत्स्थाने तिपि अनुबन्धलोपे मध्ये शपि शकारपकारयोरित्संज्ञायां लोपे च 'अतो लोपः' इत्यनेन अल्लोपे सति 'पणायति' इति सिद्धम् । पनिसाहर्यादस्मादपि धातोः स्तुतावेवायप्रत्ययः, व्यवहारे तु—पणते, पेणे, इत्यादि रूपम् । नचास्यानुदात्तत्वेन आत्मनेपदं कथन्नेति वाच्यम् , आयप्रत्ययान्तस्यानुदात्तत्वाभावेनात्मनेपदाभावात् । नचैवं पणधातौ श्रुतस्यानुदात्तेत्वस्य वैयर्थ्यं स्यादिति वाच्यम् , तस्यार्द्धधातुकविषये कदाचिदायप्रत्ययविनिर्मुक्ते चारितार्थ्येन वैयर्थ्याभावात् ।

**पणायाञ्चकार** ( ई० ४१ )—व्यवहारस्तुत्यर्थकस्यापि पण्-धातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यत्र पनिसाहचार्यात् स्तुतावर्थे आयप्रत्यये पणायेत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लिटि 'कास्यनेकाच आम्वक्तव्यः' इत्यामि अतो लोपे लिटोऽपि लुकि—'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिटपरक 'कृ' इत्यास्यानुप्रयोगे द्वित्वेऽभ्यासादिकार्ये 'पणायाञ्चकार' इति सिद्धम् ।

**क्षंसीष्ट** ( ई० ३८ )—क्षम्धातोराशीर्लिङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट' इत्यनेन सीयुडागमे अनुबन्धलोपे 'सुट तिथोः' इत्यनेन सुडागमे अनुबन्धलोपे, मस्यानुस्वारे षत्वे ष्टुत्वे 'क्षंसीष्ट' इति रूपम । एतच्च इडभावे बोध्यम् । ऊदित्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन इडागमपक्षे तु क्षंमिषीष्टेति रूपम् ।

**अक्षमिष्ट** ( ई० ४५ )—'क्षम्'-धातोर्लुङि तत्स्थाने आत्मनेपदे तप्रत्यये "लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेनाडागमेऽनुबन्धलोपे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे प्राप्ते तम्प्रबाध्य ऊदित्वेन 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिकेडागमे अपृक्तहलोऽभावात् 'अस्तिसिचोऽपृक्ते' इत्यनेनेडभावे षत्वे ष्टुत्वे च कृते 'अक्षमिष्ट' इति सिद्धम्। इडभावपक्षे तु—मस्याऽनुस्वारे 'अक्षंस्त' इति बोध्यम्।

**णेरनिटि** ( ई० ३८, ४० )—अत्र णेरिति णिङ्णिचोर्ग्रहणम्, 'आर्धधातुके' इत्यधिकृतम्। 'अतो लोप' इत्यस्माल्लोप इत्यनुवर्तते, अनिटीत्यस्य आर्द्धधातुकविशेषणत्वात् 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिः। तथा च—अनिडादावार्द्धधातुके परे णेर्लोपः स्यादित्यर्थः। 'अचीकमत' इत्यादौ णिलोपार्थमस्यावश्यकत्वम्बोध्यम्।

**सन्वल्लघुनि चङ्परेऽनग्लोपे** ( ई० ३८, ५६ )—अत्र 'अनग्लोपे' इति च्छेदः। 'चङ्परे' इत्यत्र चङ्परो यस्मादिति बहुव्रीहिः। कर्मधारयमाश्रित्य 'चङि परे' इत्यर्थो न भवति परग्रहणवैयर्थ्यात्। ननु अन्यपदार्थे बहुव्रीहिर्भवति प्रकृते च कोऽन्यपदार्थ इति चेत्? णेरेवान्यपदार्थत्वात्, अत एवाण्यन्तेभ्यः श्रिद्रुस्रुभ्यश्चङि द्वित्वे अशिश्रियत्, अदुद्रुवत्, असुस्रुवत् इत्यत्र सन्वत्वं 'दीर्घो-लघोः' इत्यनेनाभ्यासदीर्घश्च न भवति णेरभावात्। अङ्गस्येत्यनुवर्तते। णेरङ्गस्य चेति द्वयमप्यावर्तते। तत्रैको णिः 'लघुनि' इत्यत्रान्वेति। तथा च चङ्परे णौ यल्लघु तस्मिन् परत इति लभ्यते, द्वितीयः 'अनग्लोपे' इत्यत्रान्वेति। तथा च-णौ परतो योऽग्लोपस्तस्याभावे सतीति लभ्यते। अङ्गस्येत्यत्र षष्ठी निमित्तनिमित्तिभावे, अस्य चैकस्य 'चङ्परे' इत्यत्रान्वयः। तथा च-अङ्गसंज्ञानिमित्तभूते चङ्परके वर्णे परे इति लभ्यते। चङ्परकश्च वर्णोऽर्थाण्णेरिकार एव, न तु श्रिद्रुस्रुवामन्त्यवर्णः तस्य अप्रत्ययत्वेन अङ्गसंज्ञाप्रापकत्वाभावात्। द्वितीयस्य चाङ्गस्य अनुवृत्तस्य 'अभ्यासस्य' इत्यत्रान्वयः। 'सन्वदिति सप्तम्यन्ताद्वतिः, तथा च—अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपे सतीत्यर्थो भवति। अथवा 'अङ्गस्ये'ति नावर्तते चङ्परे इत्येतदङ्गस्येत्यत्रान्वेति न तु लघुनि। अङ्गस्य च प्रत्ययनिमित्तत्वादेव णेरन्यपदार्थस्य लाभः, 'लघुनि' इति तु अभ्यासस्येत्यत्रैवान्वेति, एवञ्च चङ्परे णौ यदङ्गं तस्य

यीऽभ्यासो लघुपरस्तस्य सनीव कार्यं ण्णावग्लोपे सतीत्यर्थः। 'अजजागर'दित्यत्र चङ्परे णौ यल्लघु तदभ्यासव्यवहितमिति न सन्वत्वमि'ति भाष्योक्तया प्रथमपक्ष एवात्रः समीचीन इति मन्तव्यम्।

**अचीकमत** ( ई० ४०, ४१, ४५ )—कान्त्यर्थक उकारेत्संज्ञक कम् धातोः 'कमेर्णिङ्' इत्यनेन णिङ्प्रत्ययेऽनुबन्धलोपे णित्वादुपधावृद्धौ कामीत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लुङि तत्स्थाने त-प्रत्यये अडागमे मध्ये च्लिप्रत्यये तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन चङादेशेऽनुबन्धलोपे 'अकाम् इ अ त' इत्यवस्थायां परत्वात् 'एरनेकाचोऽसंयोगपूर्वस्य' इत्यनेन यणि प्राप्ते 'ण्यल्लोपावियङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्तिकेन पूर्वविप्रतिषेधात् 'णेरनिटि' इत्यनेन णिलोपे ततः 'णौचङ्युपधाया ह्रस्वः' इत्यनेन उपधाया ह्रस्वे 'चङि' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति सूत्रेण चुत्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन सन्वद्भावे 'सन्यतः' इत्यनेनाभ्यासस्यात इत्वे 'दीर्घो लघोः' इति सूत्रेण लघोरभ्यासस्य दीर्घे 'अचीकमत' इति सिद्धम्।

द्विवचने सवर्णदीर्घे अचीकमाताम्। बहुवचने 'आत्मनेपदेष्वनतः' इत्यनेन झस्यादादेशः। मध्यमपुरुषे न कश्चिद्विशेषः। इटि तु गुण एव विशेषः। द्विवचनबहुवचनयोरतोऽकारस्य 'अतो दीर्घो यञि' इति दीर्घ एव विशेषः। णिङभावपक्षे तु-'कमेश्च्लेश्चङ्वाच्यः' इत्यनेन च्लेश्चङि चङ्परकणेरभावेन सन्वद्भावाभावादित्वदीर्घे न भवतः, शेषन्तु पूर्ववदेव कार्ये सति—'अचकमत' इति।

**संज्ञायाः कार्यकालत्वात्** ( ई० ३६, ३८, ३९, ४१, ४४, ४६, ५६ )-शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषम्' 'यथोद्देश्यं संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति। तत्र कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे-संज्ञाया इत्यादिना। 'सन्वल्लघुनि' दीर्घो लघोः' इति सूत्रद्वये अङ्गस्येति अभ्यासस्येति चानुवर्तते। तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम्। द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते। तद्योगादङ्गस्येति कर्मणि षष्ठी। तेन यत्र कृत्स्नमङ्गं द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति। एवञ्चाङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, नत्वनेकाच्केषु चकास्त्यर्थापयत्यूर्णोत्यादिषु। अत्र ण्यन्तेभ्य एभ्यश्चङि कृत्स्नमङ्गं न द्विरुच्यते, अपि तु हलादेः प्रथमावयवोऽजादेस्तु द्वितीयावयवो द्विरुच्यते। एवञ्चैतेषाम् अचचकासत्; आर्तथपत्। और्णुनवत् इत्येवं रूपाणि भवन्ति। नन्वेवं ह्रस्वहलादिःशेषश्चुत्वादीन्यपि अनेकाक्षु न स्युः।

नचेष्टापत्तिः । दिदरिद्रासति, जिगणयिषतीत्यादि लक्ष्यस्य सर्वसम्मतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्षाश्रयत्वाद् आह—वस्तुत इति । अङ्गस्येत्यस्यावयवषष्ठीत्वादङ्गावयवाभ्यासस्येति लभ्यते । ततश्च ऊर्णञि ण्यन्ते चङि नु इत्येकदेशस्यापि द्वित्वे और्णुनवदित्यत्र 'दीर्घो लघोः' इत्यभ्यासदीर्घो भवति । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमोऽर्थापिधातोश्चङि णिलोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि दीर्घस्य 'सन्वत्' इतीत्वस्य च प्रवृत्तौ आर्तिथपदित्येव रूपं भवतीति जानीम इति तृतीयश्लोकार्थः ।

अङ्गस्यावयव इति पक्षेऽपि चकास्तौ विशेषमाह—चकास्ताविति । उभयमिदमित्यस्य दीर्घः सन्वच्चेत्येतद् द्वयमित्यर्थः । न स्यात्स्याच्च व्यवस्थया—व्यवस्थया—पक्षभेदेनेत्यर्थः । चङ्परे णौ यल्लघ्विति व्याख्याने न स्यात् । चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात् । एवञ्च अचचकासत्, अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः । नन्वस्मिन् व्याख्यानभेदे किं प्रमाणमित्यत आह—इति व्याख्याविकल्पस्येति । ननु णौ इत्यस्यावृत्तिमभ्युपगम्याऽग्लोपेऽपि तदन्वयः किमर्थ इत्यत आह—णेरग्लोपेऽपीति । अगितामपीति—कमु कान्तावित्यादीनामपीत्यर्थः । सिद्धये—दीर्घसवद्भावसिद्ध्यर्थमित्यर्थः । अन्यथा कमुप्रभृतीनामुकाराद्यनुबन्धलोपमादायाग्लोपित्वाद्दीर्घसन्वद्भावौ न स्यातामित्यलम् ।

**सायात्** ( ई० ४५ )—संभक्त्यर्थक-'षण्' धातोर्लिङि 'धात्वादेः षः सः' इत्यनेन षस्य सकारे णस्याऽपि निवृत्तौ लिङः स्थाने तिप्यनुबन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमे 'सुट् तिथोः' इत्यनेन च सुडागमेऽनुबन्धलोपे 'स्कोः संयोगाद्योरन्ते च' इत्यनेन सद्वयस्याऽपि निवृत्तौ 'ये विभाषा' इत्यनेन वैकल्पिक-आत्वे 'सायात्' इति सिद्धम् । पक्षे 'सन्यात्' इति रूपम् ।

**अक्रमीत्** ( ई० ४०, ४६ )—क्रमधातोर्लुङि तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लेः सिचि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्यनेन सस्य इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य च ईटि अनुबन्धलोपे 'अक्रम् इ स् ई त्' इति जाते 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अक्रमीत्' इति । 'अतो हलादेर्लघोः' इति वृद्धिस्तु न, 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इति निषेधात् । न चास्य धातोरनुदात्तोपदेशानन्तर्भावादिटि सिद्धे 'स्नुक्रमो'रित्यनेन इड्विधानं व्यर्थमिति वाच्यम् 'अत्रैवेडेति नियमार्थत्वेन रंतोष्यते जलेन, उपक्रंस्यते इत्यादि भावकर्मलकारेषु इड्भावाभावात् ।

**उदयति विततोर्ध्वरश्मिरज्जाविति** ( ई० ३७ )—निस् निर् दु इति सान्तरान्तयोरय्धातुयोगे सान्तयोः कृतरुत्वयोस्तयोरसिद्धत्वात् 'उपसर्गस्यायतौ' इत्यनेन लत्वाभावेन निरयते दुरयते इति रूपे । रान्तयोस्तु लत्वे निलयते दुलयते इति रूपे भवतः । 'प्रत्यय' इत्यत्र प्रतेरयति परत्वाद्रेफस्य लत्वन्तु न भवति, तत्र प्रतिपूर्वकादिण् धातोरच्प्रत्यये अयतिपरत्वाभावात् । एवञ्चास्य धातोरनुदात्तत्वेन आत्मनेपदमेव भवति । नन्वेवं 'उदयती'त्यादिमाघकविप्रयोगः शत्रन्तात्सप्तम्यन्ते कथं, तत्र शानच एव प्रसक्तेरिति चेत् ? सत्यम् , इटकिटकटी इत्यत्र प्रश्लिष्टस्य इधातोरनुदात्तत्वाभावाच्छतृप्रत्ययस्य निर्बाधात् । यद्वा-चक्षिङ्धातोरिकारस्यानुदात्तया तत एवात्मनेपदसिद्धौ ङित्करणेन अनुदात्तत्वलक्षणमात्मनेपदमनित्यमित्याश्रयणेनेष्टसिद्धौ बाधकाभावात् ।

**पिप्ये** ( ई० ४१, ४२, ४५, ४७, ५४, ५६ )—ओकारेकारेत्संज्ञकवृद्धयर्थक-'प्याय' धातोर्लिटि तत्स्थाने तप्रत्यये द्वित्वे प्राप्ते 'प्यायः पी' इत्यनेन पीभावे च प्राप्ते तत्र परत्वात् पीभाव एव कृते ततो द्वित्वेऽभ्याससंज्ञायां ह्रस्वे तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशे शकारस्येत्संज्ञायां लोपे च जाते एरनेकाचोऽसंयोगपूर्वस्य' इत्यनेन यणि 'पिप्ये इति सिद्धम् । नचात्र द्वित्वं बाधित्वा प्यायः पीभावे कृते विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायात् पुनर्द्वित्वं न स्यादिति वाच्यम् , 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति परिभाषया विप्रतिषेधे बाधितस्याऽपि पुनः प्रवृत्तेरभ्युपगमात् ।

**अप्यायि** ( ई० ४४ )—ओकारेकारेत्संज्ञक-वृद्धयर्थक-'प्याय्'-धातोर्लुङि तत्स्थाने तप्रत्यये 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेन अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे प्राप्ते तमपवाद्य 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इत्यनेन विकल्पेन चिणि अनुबन्धलोपे 'चिणो लुक्' इत्यनेन तशब्दस्य लोपे 'अप्यायि' इति सिद्धम् । चिणभावपक्षे सिजादेशे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे षत्वे ष्टुत्वे सति 'अप्यायिष्ट' इति सिद्धम्भवति । 'अस्तिसिचोऽपृक्ते' इत्यनेन ईडागमस्तु न, अपृक्तहलोऽभावात् ।

**जिगाय** ( ई० ४५, ४७ )—जयार्थक-'जि'-धातोर्लिटि तत्स्थाने तिपि तस्य परस्मैपदानामित्यादिना णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां 'सन्लिटोर्जेः' इत्यनेनाभ्यासात्परस्य जस्य कुत्वे 'अचोञ्णिति' इत्यनेन वृद्धौ, आयादेशे 'जिगाय' इति सिद्धम् ।

**धिनोति** ( ई० ४१, ४७ )—इकारेत्संज्ञक'धिव' धातोर्लटि तिपि अनुबन्धलोप इदित्वान्नुमि सार्वधातुकसंज्ञायां शपि प्राप्ते 'धिन्विकृण्व्योर च' इत्यनेनाकारान्तादेशे उप्रत्यये च कृते 'धिन्-अ-उ-ति' इत्यवस्थायाम् 'अतो लोपः' इत्यनेन अकारलोपे 'सार्वधातुकार्धधातुकयोः' इत्यनेनोकारस्य गुणे कृते 'धिनोति' इति सिद्धम् । नन्वत्र वकारस्याकारं विधायाल्लोपः कथं क्रियते तदपेक्षया लाघवात् वलोप एवानेन विधीयतामिति चेत् ? मैवम् , तथासति लोपस्याजादेशत्वाभावात्स्थानिवद्भावाभावेन लघूपधगुणापत्तेः । अल्लोपे तु अजादेशत्वेन स्थानिवद्भावाद्गुणस्याप्रवृत्तेः ।

**धिनु** ( ई० ४५ )—प्रीणनार्थक-इकारेत्संज्ञक-'धिव्' धातोर्लोटि तत्स्थाने सिपि 'सेर्ह्यपिच्च' इत्यनेन ह्यादेशे इदित्वात् 'इदितो नुम् धातोः' इत्यनेन नुमि शप्प्राप्ते तमपवाद्य 'धिन्विकृण्व्योरच' इत्यनेन वकारस्याऽकारे उप्रत्यये च कृते 'अतो लोपः' इत्यनेनाल्लोपे तस्य स्थानिवद्भावाल्लघूपधगुणाभावे । 'उतश्च प्रत्ययादसंयोगपूर्वात्' इत्यनेन हेर्लुकि 'धिनु' इति सिद्धम् ।

**धिनवाव** ( ई० ३७ )—प्रीणनार्थक-इकारेत्संज्ञक-'धिव्' धातोर्लोटि तत्स्थाने वस्प्रत्यये इदित्वान्नुमि अनुबन्धलोपे सार्वधातुकसंज्ञायाम् 'धिन्विकृण्व्योर च' इत्यनेन शपमपवाद्य वकारस्याकारे उप्रत्यये च कृते, अतो लोपे 'लोपश्चास्यान्यतरस्याम्वोः' इत्यनेनोकारलोपे प्राप्ते ततो नित्यत्वादाडागमे अनुबन्धलोपे गुणेऽवादेशे च कृते 'नित्यं ङितः' इत्यनेन सकारस्य लोपे 'धिनवाव' इति सिद्धम् । न च ङित्वाभावात्कथं सलोप इति वाच्यम् , 'लोटो लङ्वत्' इत्यनेनैव ङित्वाभ्युपगमात् ।

**अघाक्षि** ( ई० ३६, ४२ )—ऊकारेत्संज्ञक-'गाहू'-धातोर्लुङि तत्स्थाने इट्प्रत्यये तस्य एत्वे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिक-इड्विधानात्तदभावपक्षे 'हो ढः' इति हस्य ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इत्यनेन भष्भावे 'षढोः कः सि' इत्यनेन ढस्य कत्वे ततः षत्वे कषसंयोगे क्षेजाते 'अघाक्षि' इति सिद्धम् ।

**जघृक्षे** ( ई० ३७, ४५ )—गर्हणार्थक-ऊकारेत्संज्ञक-गृह-धातोर्लिटि तत्स्थाने आत्मनेपदे थासि थासः से' इत्यनेन थासः से कृते ऊदित्वेनेटो वैकल्पिकत्वात्तदभावपक्षे 'लिटि धातो'रिति द्वित्वे अभ्याससंज्ञायां तस्य 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चुः' इत्यनेन चुत्वेन जकारे लिटः कित्वेन गुणाभावे हस्य ढत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः' इत्यनेन भष्भावे 'षढोः कः सि' इत्यनेन

ढस्य कत्वे कृष्संयोगे क्षे जाते 'जघृक्षे' इति सिद्धम्। नन्वत्र कित्वात्परत्वेन गुणः कथन्न भवतीति चेत्? 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन' इति वार्त्तिकेन पूर्वं कित्वस्यैव जातेन गुणस्य प्राप्त्यभावात्। स्वरतीतीड्विकल्पपक्षे तु 'जगृहिषे' इति रूपं भवति।

**अक्ष्णुतः** ( ई० ४० )—व्याप्त्यर्थक-ऊकारेत्संज्ञक-'अक्ष्'धातोर्लटि तत्स्थाने तसि सार्वधातुकसंज्ञायां शपि प्राप्ते तमपवाद्य 'अक्षोऽन्यतरस्याम्' इत्यनेन विकल्पेन श्नुप्रत्ययेऽनुबन्धलोपे तसो ङित्वेन श्नोरुकारस्य गुणाभावे णत्वे सस्य रुत्वे विसर्गे 'अक्ष्णुतः' इति सिद्धम्। पक्षे—'अक्षुतः' इति रूपम्।

**अक्ष्यति** (ई० ३८)—व्याप्त्यर्थक-ऊकारेत्संज्ञक-'अक्ष्'-धातोर्लृटि तत्स्थाने तिपि अनुबन्धलोपे शपमपवाद्य स्यप्रत्यये 'अक्ष् स्य ति' इत्यवस्थायां 'स्कोः संयोगाद्योरन्ते च' इत्यनेन कलोपे 'षढोः कः सि' इत्यनेन षस्य कत्वे तत्परस्य सस्य षत्वे 'अक्ष्यति' इति रूपं निष्पन्नम्।

**आष्टाम्** ( ई० ३६ )—व्याप्त्यर्थक ऊकारेत्संज्ञक अक्ष्धातोर्लुङि तत्स्थाने तसि 'तस्थस्थमिपां तान्तन्तामः' इति तसस्तामादेशे तस्य सिजादेशे 'वदव्रजहलन्तस्याचः' इत्यनेन हलन्तलक्षणवृद्धौ 'स्कोः संयोगाद्योरन्ते च' इत्यनेन कलोपे तकारस्य 'ष्टुना ष्टुः' इत्यनेन ष्टुत्वे 'आष्टाम्' इति स्वरतीतीडभावे रूपं निष्पन्नम्। अत्र प्रयोगे 'मा भवान्' पूर्वं योज्यम्, मूलकृताऽपि मूले 'मा भवान्' इत्युपात्तम्, अन्यथा आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्याञ्च रूपसिद्धेः 'मा भवान्' इत्यस्य वैयर्थ्यापत्तेः, अत्र 'नेटी' ति निषेधाभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव 'मा भवान्' इत्यस्य सार्थक्यात्। इट् पक्षे तु अक्षिष्टामिति।

**तक्ष्णोति** ( ई० ४६ )—तनूकरणार्थक-ऊकारेत्संज्ञक-'तक्ष्'-धातोर्लटि तत्स्थाने तिप्यनुबन्धलोपे शब्विषयतायामेव 'तनूकरणे तक्षः' इत्यनेन विकल्पेन श्नुप्रत्यये तिपः पित्वेन ङित्वाभावात् 'सार्वधातुके'ति गुणे णत्वे सति 'तक्ष्णोति' इति सिद्धम्। श्नुप्रत्ययाऽभावे तु—तक्षति—इति रूपम्।

**अपोषीत्** ( ई० ४५ )—पुष्ट्यर्थक-'पुष्'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे लघूपधगुणे 'अपोषीत्' इति सिद्धम्। नचानिट्कारिकास्वस्य पाठात्

'शल इगुपधादनिटः क्सः' इत्यनेन क्सादेशः कथन्नेति वाच्यम्, अनिट्कारिकासु श्यना निर्देशेनास्य सेट्कत्वात् । नचैवमपि पुषादित्वात् च्लेरङ् कुतो नेति वाच्यम्, अत्रापि श्यनानिर्देशात् ।

**अयं न सार्वत्रिकः** ( ई० ३७ )—अदनार्थक-घस्-धातोर्हि यत्र प्रयोगे लिङ्गं प्रत्यक्षवचनं वाऽस्ति तत्रैव प्रयोगो भवति । तद्यथा भ्वादौ परस्मैपदे पाठः । न च धातुसञ्ज्ञार्थः पाठ इति वाच्यम्, द्युतदीप्तावित्यतः प्राक् 'अनुदात्तेत' इत्यतोऽग्रे पाठेनैव सिद्धे क्रमिकपरस्मैपदपाठवैयर्थ्यापत्तेः । अनिट्कारिकासु पाठेन वलाद्यार्द्धधातुकेऽस्य प्रयोगो भवतीत्यपि ज्ञेयम् । 'घसस्यदः क्मरच्' इत्यत्र विशिष्य घसेरुपादानेन क्मरचि प्रयोगे प्रत्यक्षवचनम् । एवञ्च नायं सार्वत्रिक इति फलति । अत एव 'लिट्यन्यतरस्याम्' इत्यनेन वैकल्पिकेन घस्लादेशविधानं सङ्गच्छत इत्यवधेयम् ।

**दिद्युते**—द्युत्धातोर्लिटि तत्स्थाने प्रथमपुरुषैकवचने तादेशे 'लिट् च' इत्यार्धधातुकत्वे 'लिटस्तझयोः—' इति तस्य स्थाने एशि अनुबन्धलोपे 'लिटि धातोः—' इति द्वित्वे अभ्यासत्वे 'द्युतिस्वाप्योः सम्प्रसारणम्' इति अभ्यासयकारस्य सम्प्रसारणे इकारे जाते 'सम्प्रसारणाच्च' इति पूर्वरूपे 'दित् द्युत् ए' इति स्थिते 'हलादिः शेषः' इति अभ्यासतकारस्य लोपे 'दिद्युते' इति ।

**अद्युतत्** ( ई० ४५ )—द्युत्धातोर्लुङि तत्स्थाने 'द्युद्भ्यो लुङि' इति विभाषया परस्मैपदसंज्ञकतिपि 'लुङ्लङ्—' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति च्लेरङि अनुबन्धलोपे ङित्वाद् गुणनिषेधे 'इतश्च' इति तिप इकारलोपे 'अद्युतत्' इति सिद्धम् ।

**अद्योतिष्ट** ( ई० ४५ )—द्युत्धातोर्लुङि 'द्युद्भ्यो लुङि' इति विकल्पपक्षे लुङ्स्थाने तङि 'लुङ्लङ्—' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति इटि 'पुगन्तलघूपधस्य च' इति गुणे 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे 'अद्योतिष्ट' इति । पुषादिसूत्रे परस्मैपदग्रहणादत्र च्लेरङ् न ।

**मिमिदे** ( ई० ४५, ४७ )—ओत्संज्ञक-आकारेत्संज्ञक—स्नेहनार्थक-'मिद्'-धातोर्लिटि तत्स्थाने तप्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे

'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वाल्लघूपगुणाऽभावे 'मिमिदे' इति सिद्धम्। 'मिदेर्गुणः' इत्यनेन गुणस्तु न भवति, 'ष्ठिवुक्लमुचमां शिति' इत्यनेन शितीत्यनुवर्तनेन तस्य चेत्संज्ञकशकारादावित्यर्थकरणेन 'मेद्यति' इत्यादावेव गुणविधानात्प्रकृते एश आदिशित्वाभावाज्ञानेन गुण इति विभावनीयम्।

**वर्त्स्यति** ( ई० ५६ )—वृत्धातोर्लृटि 'वृद्भ्यः स्यसनोः' इति विभाषया परस्मैपदे सति लृटः स्थाने तिपि अनुबन्धलोपे 'स्यतासीलृलुटोः' इति स्यप्रत्यये स्यस्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति इटि प्राप्ते 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधे 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वे 'वर्त्स्यति' इति। पक्षे 'वर्तिष्यते' इति।

**सस्यन्दे** ( ई० ४६ )—प्रस्रवणार्थक-ऊकारेत्संज्ञक-'स्यन्द्' धातोर्लिटि तत्स्थाने तप्रत्यये 'लिटस्तझयोरेशिरेच्' इत्यनेन तस्यैशादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे प्राप्ते तमपवाद्य 'शर्पूर्वाः खयः' इत्यनेन खयशेषे 'सस्यन्दे' इति सिद्धम्।

**स्यन्त्स्यति** ( ई० ३७, ३९, ४५, ४६, ४७ )—प्रस्रवणार्थक-ऊकारेत्संज्ञक-'स्यन्द्'-धातोर्लृटि तत्स्थाने 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे तिपि अनुबन्धलोपे शपमपवाद्य मध्ये स्यप्रत्यये 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे प्राप्ते तं प्रबाध्य ऊदित्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिक-इट् प्राप्तः, तस्यापि 'न वृद्भ्यश्चतुर्भ्यः' इत्यनेन निषेधे दस्य चर्त्वे सति 'स्यन्त्स्यति' इति सिद्धम्भवति। नच सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षतया च 'न वृद्भ्यः' इति निषेधस्य बहिरङ्गत्वेन तदपेक्षया ऊदिल्लक्षणेड्विकल्पस्यैवान्तरङ्गत्वादिटि सति नोक्तरूपं सिद्ध्यतीति वाच्यम्, एवं सति 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्र चतुर्ग्रहणस्य वैयर्थ्यापत्तेः। न च कृपूव्यावृत्यर्थं तदिति वाच्यम्, तत्र 'तासि च क्लृपः' इत्यत्र चकारेण सकाराद्यार्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेः।

**अस्यदत्** ( ई० ४५ )—ऊकारेत्संज्ञक-प्रस्रवणार्थक—'स्यन्द्'—धातोर्लुङि 'द्युद्भ्यो लुङि' इत्यनेन वैकल्पिकपरस्मैपदे तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे प्राप्ते तमपवाद्य 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यनेनाङि 'अनिदितां हल उपधायाः क्ङिति' इत्यनेन नलोपे 'अस्यदत्' इति सिद्धम्। परस्मैपदाऽभावपक्षे आत्मनेपदे तु—अङभावाच्च्लेः सिजादेशे ऊदित्वात्

'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिकेडागमे सति नलोपाऽभावे षत्वे ष्टुत्वे 'अस्यन्दिष्ट' इति सिद्धम् । इडभावपक्षे–'अस्यन्द् स् त' इति दशायां 'झलो झलि' इत्यनेन सलोपे दस्य चर्त्वे 'अस्यन्त' इति भवति । नचाऽपित्त्वेन ङित्वात् 'अनिदिता'मिति नलोपः कथन्नेति वाच्यम्, सिज्लोपस्याऽसिद्धत्वेनऽनुपधात्वात् ।

**अनुष्यन्दते** ( ई० ४५ )—'अनु' इत्युपसर्गपूर्वकात् 'स्यन्दू प्रस्रवणे' इत्यस्माद्धातोर्लटि आत्मनेपदे तप्रत्यये सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'टित आत्मनेपदानां टेरे' इत्येत्वे 'अनुविपर्यभिनिविभ्यः स्यन्दतेरप्राणिषु' इति विभाषया सस्य षत्वे 'अनुष्यन्दते' इति । पक्षे 'अनुस्यन्दते' इति च भवति । जलम् इति शेषः । 'अनुस्यन्दते हस्ती' इत्यत्र तु न षत्वं प्राणिनो हस्तिनः कर्त्तुर्वर्त्तमानत्वात् ।

**चक्लृपे** ( ई० ४६ )—कृप्धातोर्लिटि तत्स्थाने तप्रत्यये एशादेशे 'लिटि धातोः'–इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चुः' इत्यनेन चुत्वे 'चकृप ए' इत्यवस्थायाम् 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वेन गुणाऽभावे ऋकारैकदेशस्य रेफसदृशस्य 'कृपो रोलः' इत्यनेन लकारसदृशे सति 'चक्लृपे' इति सिद्धम् ।

**कल्प्तासि** ( ई० ३८ )—ऊकारेत्संज्ञक–सामर्थ्यार्थक–'कृप्'–धातोर्लुटि तत्स्थाने 'लुटि च क्लृपः' इत्यनेन विकल्पेन परस्मैपदे सिपि अनुबन्धलोपे मध्ये तासिप्रत्यये, ऊदित्वात्–'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेनेड्विकल्पे प्राप्ते 'तासि च क्लृपः' इत्यनेन तन्निषेधे 'पुगन्तेति' गुणे रपरत्वे 'कृपो रोल.' इत्यनेन लत्वे च कृते 'कल्प्तासि' इति सिद्ध्यति । परस्मैपदाभावपक्षे तु आत्मनेपदे विकल्पेनोदिल्लक्षणेडागमे टेरेत्वे कल्पितासे इडभावपक्षे 'कल्प्तासे' इति रूपम्भवति ।

**क्लृप्सीष्ट**—'कृपू सामर्थ्ये' इत्यस्माद्धातोराशीर्लिङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुटि 'सुट् तिथोः' इति सुटि अनुबन्धलोपे 'कृप् सी स् त' इति स्थिते 'स्वरतिसूति—' इति ऊदित्वात् वेटि 'पुगन्त—' इति गुणे रपरत्वे 'कृपो रो लः' इति रेफस्य लत्वे उभयोः सकारयोः पर्यायेण षत्वे ष्टुत्वे 'कल्पिषीष्ट' इति । इडभावे तु 'कृप् सी स् त' इत्यवस्थायां 'कृपो रो लः' इति लत्वे कृते 'पुगन्त—' इति गुणे प्राप्ते 'लिङ्सिचावात्मनेपदेषु' इति लिङः कित्वेन 'क्ङिति च' इति गुणनिषेधे सस्य षत्वे ष्टुत्वे 'क्लृप्सीष्ट' इति ।

**अक्लृप्त**—कृप्धातोर्लुङि तत्स्थाने 'द्युद्भ्यो लुङि' इति विकल्पपक्ष आत्मनेपदे तप्रत्यये 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ सिचि अनुबन्धलोपे 'स्वरतिसूति' इति ऊदित्वाद् वेटि 'अ कृ प् स् इ त्' इति स्थिते 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वे 'कृपो रो लः' इति रेफस्य लत्वे षत्वे ष्टुत्वे 'अकल्पिष्ट' इति। इडभावे तु 'कृपो रो लः' इति लत्वे 'अक्लृप् स् त' इति स्थिते 'झलो झलि' इति सलोपे 'अक्लृप्त' इति सिद्धं भवति।

**प्रविघाटयिता** ( ई० ३७, ३८ )—ननु घटादयो मितः' इति वचनेन मित्संज्ञायां 'प्रविघाटयिता', कमलवनोद्घाटनं कुर्वते' इत्यादि प्रयोगा असंगताः एवेति चेन्न, चुरादौ पठितस्य 'घट संघाते' इति धातोः प्रयोगात्। न च चौरादिकस्यैव घट संघाते इति धातोश्चेष्टारूपविशेषार्थे मित्वार्थमनुवाद इति वाच्यम्, 'नान्येऽमितोऽहेतौ' इति वचनेन ज्ञपादिभ्योऽन्येषां चुरादिपठितानां धातूनां मित्वाभावात्। एवञ्च घट चेष्टायामिति स्वतन्त्रोऽन्यधातुरिति सारांशः।

**'नान्ये मितोऽहेतावि'ति'** ( ई० ३८ )—इदञ्च गणसूत्रं चुराद्यन्तर्गतम्। तत्र हि 'ज्ञप मिच्च' यम च परिवेषणे' 'चह परिकल्कने' 'रह त्यागे' 'बल प्राणने' चिञ् चयने' इति पञ्च धातून् पठित्वा 'नान्ये मितोऽहेतौ' इति पठितम्। एषु पञ्चस्वपि मिदित्यनुवर्तते। 'अहेता' विितिच्छेदः। कस्मादन्ये इत्यपेक्षायां सन्निहितत्वाज्ज्ञापादिपञ्चभ्य इति लभ्यते। हेतुशब्देन 'हेतुमति च' इति सूत्रविहितो णिज्लभ्यते, तद्भिन्नो णिच् स्वार्थिकोऽहेतुः। तथा च–अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः। एवञ्च–चुरादौ ज्ञपादिपञ्चकव्यतिरिक्तानां मित्त्वाऽभावात् 'घट चेष्टाया'मिति निर्देशश्चौरादिकस्य 'घट सङ्घाते' इत्यस्य चेष्टायां वृत्तौ मित्त्वार्थोऽनुवाद इति न युज्यते, किन्तु इहैव घटादिगणे 'घट चेष्टाया'मित्यपूर्वोऽयं धातुः। तस्य चार्थान्तरवृत्तावपि मित्वमस्त्येवेति 'विघटयती'त्यादौ मित्वाद्ध्रस्वो भवत्येवेत्यवधेयम्।

**विव्यथे** ( ई० ४६ )—व्यथ्धातोर्लिटि तत्स्थाने तप्रत्यये 'लिटिधातोः–' इति द्वित्वेऽभ्याससंज्ञायां सत्यां हलादिशेषमपवाद्य 'व्यथो लिटि' इत्यनेन अभ्यासस्य सम्प्रसारणे पूर्वरूपे थस्य हलादिशेषे 'टित आत्मनेपादानां टेरे' इति एत्वे 'विव्यथे' इति।

**णट नृतौ** ( ई० ४० )—भ्वादौ टवर्गान्तेषु पठितस्य णट्धातोर्नृतमित्यस्य नाटयमर्थः। नाटयञ्च वाक्यार्थाभिनयः। तस्यैव घटादौ पाठात् नृत्यं नृत्तं चार्थः।

तत्र पदार्थाभिधयो नृत्यम् , गात्रविक्षेपमात्रं नृत्तम् । एवञ्चार्थभेदसत्त्वादर्थविशेषे मित्वार्थोऽनुवादः ।

**प्रज्वलयति** ( ई० ४७ )—प्रोपसर्गक-ज्वल-धातोर्णिचि अनुबन्धलोपे वृद्धौ धातुसंज्ञायां लटि तिपि घटादिगणे पाठान्नित्यमित्त्वेन 'मितां ह्रस्वः' इत्यनेन ह्रस्वे मध्ये शपि गुणेऽयादेशे 'प्रज्वलयति' इति सिद्धम् । ननु ज्वलयति, ज्वालयति, इत्युभयरूपदर्शनात्सोपसर्गे विकल्पेन कथन्न मित्वमिति चेत् ? मैवम्—'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इत्यनेनानुपसर्गादेव वैकल्पिकमित्वविधानेन प्रकृतेऽप्राप्तेः । नचैवं 'प्रज्वालयति' इति प्रयोगो न स्यादिति वाच्यम् , प्रज्वलनं प्रज्वालः, भावे घञ् उपधावृद्धिः । प्रज्वालं करोतीत्यर्थे णिचि कृते उक्तरूपस्य सिद्धत्वात् ।

**गणान्तरे पठितानां** ( ई० ४८ )—धातूनां मित्वार्थं घटादावनुवादस्तत्फलन्तु—णौ मितां ह्रस्वः इत्येव न, किन्तु तत्तद्गणनिर्दिष्टकार्यमपि भवत्येव, यथा 'दॄ वेदारणे' क्र्यादौ पठितः तस्येहाऽनुवादेऽपि श्नाप्रत्यय एव भवति न तु शप् । स च तत्र विदारणेऽर्थे पठितः, अत्र तु 'भये' इति भेदात् कथं श्नाविकरण एवायमेति वाच्यम् , अर्थनिर्देशस्योपलक्षणत्वात् । धात्वन्तरमेवेदन्न तु क्र्यादेरनुवाद इति मताश्रयणे तु शबेव भवति भौवादिकत्वात् । एवं 'नॄ नये' इत्यादयोऽपि ये गणान्तरप्रयुक्तास्तेभ्यः श्नाविकरणा एव जायन्ते ।

**श्रपयति** ( ई० ३९, ४०, ५६ )—घटादौ 'श्रै पाके' इति कृतात्वस्य 'श्रा पाके' इत्यादादिकस्य च सामान्येनानुकरणं विधाय 'श्रा पाके' इति पठितः । 'सति सम्भवेऽन्यत्र पठितानामिह मित्वार्थोऽनुवाद' इति सिद्धान्तात् । तत्र 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'मिति परिभाषाभ्याञ्चोभयोर्ग्रहणम्भवति । यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाऽप्रवृत्तावपीष्टं सिध्यति, तथाऽप्यविशेषादुभयोरपि प्रवृत्तिः । ततश्च—तस्माण्णिचि अनुबन्धलोपे 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इत्यनेन पुगागमे श्रापीत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तिपि घटादित्वेन मित्वात् 'मितां ह्रस्वः' इत्यनेनोपधाह्रस्वे शपि गुणे अयादेशे च कृते 'श्रपयति' इति ।

**मारणतोषणनिशामनेषु ज्ञा** (ई० ४० ४४)—श्नाविकरणस्यैव 'ज्ञा अवबोधने' इति धातोः मारणतोषणनिशामनेष्वर्थेषु पाठात् णौ मित्वार्थमिहानुवादः ।

तत्फलं यथाक्रमं—पशुं संज्ञपयति, हरिं ज्ञपयति, रूपं ज्ञपयति, शरं ज्ञपयति इत्यादौ मितां ह्रस्वः।

**'विज्ञापना भर्तृषु सिद्धिमेति'** ( ई० ३७, ४०, ४४ )—ननु ज्ञाधातोः ज्ञप्धातोश्च णौ मित्वात 'मितां ह्रस्वः' इत्यनेन ह्रस्वत्वात् विज्ञापनेति प्रयोगः कथमिति चेत् ? माधवमतेऽचाक्षुषज्ञाने मित्वाभावेन ह्रस्वाभावात्। तथा च बोधने ज्ञा धातोः 'ज्ञापयति' ज्ञाप् धातोस्तु ज्ञपयतीति रूपं माधवमते बोध्यम्। न च ज्ञापनमात्रे मित्वमिति मते विज्ञापनेत्यत्र मित्वं दुर्वारमिति वाच्यम्, तन्मते 'ज्ञा नियोगे' इति चौरादिकधातोः 'नान्ये मितोऽहेतौ' इति मित्वनिषेधेन ह्रस्वाभावात्। न च नियोगार्थस्य तस्य कथं ज्ञापने वृत्तिरिति वाच्यम्, धातूनामनेकार्थत्वात्। निशानेष्विति पठतां हरदत्तादीनां मते तु मारणतोषणतीक्ष्णीकरणान्यत्वात्तस्मिन्नर्थे दाधातोर्मित्वाप्रसक्तेरिति दिक्।

**कम्पने चलिः** ( ई० ४० )—ज्वलादिः 'चल कम्पने' धातुस्तस्य घटादौ पाठान्मित्वे शाखा 'चलयति' इत्यत्र मितां ह्रस्वः। कम्पनादन्यत्र ह्रस्वाभावे—शीलश्चालयतीति रूपम्। तथाहि चल धातोर्णिचि वृद्धौ धातुसंज्ञायाम् लटि तिपि शपि गुणायादेशयोः कृतयोः सिद्ध्यपि रूपम्।

**मदी हर्षग्लेपनयोः** (ई० ४० )—श्यन्विकरणस्य दैवादिकस्य मदी धातोः घटादौ मित्वार्थोऽनुवादः। तेन मदयतीत्यादौ मितां ह्रस्वः। अन्यत्र—मादयति।

**रजो विश्रामयन्राज्ञामिति** ( ई० ३६, ४२ )—विपूर्वकात् श्रमेः ण्यन्ताल्लटः शत्रादेशे प्रातिपदिकत्वान्नुमादिके कृते विश्रामयन्निति सिद्धम्। ननु 'मितां ह्रस्वः' इत्यनेन हस्वे कथं रूपसिद्धिरिति चेत् ? उक्तसूत्रे 'वा चित्तविरागे' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणेन अत्र ह्रस्वाभाव एवाश्रयणात्।

**ससीतयो राघवयोरधीयन्निति**। अधिपूर्वकात् स्मरणार्थकेण्धातोर्लटः शतरि अनुबन्धलोपे मध्ये शपि तस्य लुकि धात्विकारस्य इयङि अनुबन्धलोपे सवर्णदीर्घे शत्रन्तादधीयच्छब्दात् प्रातिपदिकत्वेन स्वाद्युत्पत्तौ नुमादिके कृते 'अधीयन्नि'ति सिद्धम्। नन्वत्र सवर्णदीर्घात्प्राक् 'पूर्वं धातुः साधनेन युज्यते' इति नियमाच्छत्रादेशानन्तरम् 'इग्वदिक' इत्यतिदेशेन 'इणो यणि'ति यणादेशे उक्तरूपं न सिद्धयतीति चेत् ? मैवम्, 'आर्धधातुके' इत्यधिकारे भाष्ये 'इणो गा लुङि' इति सूत्रे 'इण्वदिकः' इति वार्त्तिकपाठोपलम्भात्तदधिकारोक्तानामेव कार्याणामुपस्थि-

ात्वेन 'इणो यण्' इत्यस्यार्धधातुकाधिकारस्थत्वाभावादतिदेशाभावेन यणाद्यप्राप्तौ :यङ्दीर्घादिके सति उक्तरूपं सिद्धमेवेति भावः ।

**शमो दर्शने** ( ई० ३७, ४१, ४५ )—इदञ्च घटादौ गणसूत्रम् । दर्शनञ्च चाक्षुषज्ञानम् । शमधातुर्हि दिवादौ श्यन्विकरणः उपशमार्थको वर्तते, आलोचनार्थक-शमधातुस्तु चौरादिकः । तत्र दैवादिकः श्यन्विकरण एवात्र गृह्यते, चौरादिकस्य तु नाऽन्येमितोऽहेतौ' इत्यनेनैव मित्वनिषेधात् । तथा च शाम्यतिर्दर्शने मिच्च स्यादि-:यर्थः सम्पद्यते । उदाहरणं यथा—निशामयति रूपम्, पश्यतीत्यर्थः । ननूपशा-मार्थकस्य दर्शने कथं वृत्तिरिति चेत् ? धातूनामनेकार्थत्वात् । दर्शनादन्यत्र तु—नेशमय्येति रूपम् । तत्र श्रावयित्वेत्यर्थः ।

**निशामय तदुत्पत्तिम्** ( ई० ३७, ४१ )—'शमो दर्शने' इति गणसूत्रम्, शाम्यतिर्दर्शने मिन्न स्यादिति तदर्थः । उदाहरणं यथा—'निशामय' इति । दर्श-नार्थातिरिक्ते मित्वादेव 'प्रणयिनो निशमय्य वधूः कथाः' इत्यादि प्रयोगः संग-च्छते । नचैवं श्रवणेऽपि मित्वात् 'निशामय' इति रूपं कथं सिद्ध्येत् इति वाच्यम्, शम आलोचने' इति चौरादिकस्य 'नान्ये मितोऽहेतौ' इति मित्वनिषेधेन ह्रस्वा-भावात् । नचालोचनार्थकस्य श्रवणे कथं वृत्तिरिति वाच्यम्, श्यन्विकरणस्य शमेरुपशमार्थकस्य यथा धातूनामनेकार्थत्वाभ्युपगमेन दर्शने वृत्तिस्तद्वदेवात्राप्यभ्यु-पगमेनादोषात् ।

**पर्यवसितं नियमयन्निति** ( ई० ३६, ४५ )—घटादौ 'यमोऽपरिवेषणे' इति गणसूत्रं पठितम्, तेन हि परिवेषणभिन्ने मित्वं निषिध्यते । यथा—'आयामयति' इति । अत्रापरिवेषणे वृत्तेर्न मित्वम्, परिवेषणे तु मित्वं भवत्येव, यथा—यमयति ब्राह्मणान् । ननु यद्यपरिवेषणे मित्वनिषेधोऽनेन क्रियते तर्हि 'पर्यवसितं नियमयन्नि'त्यत्रापि परिवेषणभिन्नत्वेन मित्वनिषेधात्कथं रूपसिद्धिरिति चेत् ? सत्यम्, नियमनं नियमः, निपूर्वकाद् यमधातोः 'यमः समुपनिविषु चे'त्यनेन भावेऽप्रत्ययः, तस्मान्मतुपि अनुबन्धलोपे मस्य वत्वे नियमवच्छब्दात् 'तत्करोति तदाचष्टे' इति णिचि अनुबन्धलोपे 'विन्मतोर्लुक्' इति मतुपो लुकि ण्यन्ताल्लटः शतरि गुणाया-देशयोः कृतयोर्नियमयच्छब्दो निष्पन्नः । तस्मात्प्रातिपदिकत्वात्स्वाद्युत्पत्तौ नुमादिके सति 'नियमयन्नि'ति निष्पन्नम् । वस्तुतस्तु मतुपो लुकि टिलोपस्य प्राप्त्यभावेन 'अचो ञ्णिति' इत्यनेन वृद्धौ पुगागमापत्तिः । अतश्च नियमवदिर्थकादर्श-आद्य-

जन्तान्नियमशब्दात् 'तत्करोती'ति णिचि इष्ठवत्वाट्टिलोपे तस्य स्थानिवद्भावेन वृद्ध्यभावे लटि शत्रादेशे नियमयन्निति भवतीति विभावनीयम् ।

**गणानां क्रमिकत्वे किं मान**मिति प्रश्ने–अष्टाध्यायीं-तथा धातुपाठमाश्रित्यैव भ्वाद्यादिगणानां यथाक्रमं समावेशो ग्रन्थकृता कृतोऽतः सूत्रपाठधातुपाठावेव तत्र प्रमाणम् । तथाहि–धातुपाठे सर्वप्रथमो भूरेव पठितोऽतस्तदादीनां धातुत्वोपपत्तये प्रथमाध्याये 'भ्वादयो धातयः' इत्यनेन धातुसंज्ञा विहिता । यत्र च 'अद् भक्षणे' इति धातुस्तदादि अदादिगणेन निर्दिष्टं भवति, अत्रापि च अदिप्रभृतीनां शपो लुक्त्वाय 'अदिप्रभृतिभ्यः शपः' इति सूत्रम् । एवं 'हु दानादानयोः' 'दिवुक्रीडाविजगीषेत्यादि' 'षुञ् अभिषवे' तुद् व्यथने' 'रुधिर् आवरणे' 'तनु विस्तारे' 'डुक्रीञ् द्रव्यविनिमये' 'चुर स्तेये' इति तत्तद्धातुतस्तत्तद्धातुपर्यन्तं जुहोत्यादयो गणाः, यथाक्रमं सूत्राणि च तत्तद्धात्वादिमाश्रित्य निर्दिष्टाः सन्ति । एवञ्च कौमुद्यां दीक्षितेन तत्क्रममनुरुध्यैव गणसन्निवेशः कृत इत्यवधेयम् ।

**'स्खदिः अवपरिभ्याञ्च** ( ई० ४५ )—इदञ्चाऽपि गणसूत्रम् । स्खदिरितीकारनिर्देशः । अव-परि-आभ्यां परः स्खदधातुभिन्नेत्यर्थः । उदाहरणं यथा—अवस्खादयति, परिस्खादयति । 'स्खद स्खदने' इत्यस्य घटादौ पाठान्मित्वप्राप्तावनेन निषिध्यते । षत्वन्तु न भवति अषोपदेशत्वेनादेशसकारत्वाऽभावात् ।

अत्र त्रिसूत्र्यां क्षीरस्वामी 'न कम्यमि चमाम्' इत्यतो नञमनुवर्त्य 'शमः–अदर्शने' इति चिच्छेद । तत्र शमधातुर्दर्शने मित्स्यादित्यर्थः । अमन्तत्वादेव सिद्धे 'अदर्शन एवायं मित्स्यान्न तु दर्शने इति नियमार्थमिति तदाशयः । वस्तुतस्तु—पर्यवसानगत्या पूर्वमतान्नातिरिच्यत इत्यवधेयम् । यमधातावपि अमन्तत्वादेव सिद्धेरपरिवेषणे एव मिन्न तु परिवेषणे इत्याह । एवञ्च—द्राघयति व्यापारयति वेत्यर्थे मित्वाद्ध्रस्वे 'आयमयती'त्येव रूपम् । परिवेषणे तु—मित्वाऽभावाद्ध्रस्वाऽभावे 'यामयति ब्राह्मणान्' इति भवतीति पूर्वमताद्विपरीतं फलति । तथा च पर्यवसितं नियमयन्' इत्यत्र यमेरपरिवेषणार्थत्वान्मित्वे ह्रस्वो निर्बाध इति तदर्थनियमवच्छब्दात्करोत्यर्थे णिचि नियमयन्निति साधनीयन्तदा कष्टकल्पना नेति तदाशयः ।

एवं स्खदिधातौ घटादित्वादेव मित्वसिद्धेः 'सोपसर्गस्य चेत् स्खदेर्मित्वं तर्हि अवपरिभ्यां परस्यैव मित्वं न तूपसर्गान्तरादिति नियमार्थं 'स्खदिरवपरिभ्याञ्चेति'

सूत्रम्। एवञ्च प्रस्खादयतीत्यत्र मित्वाऽभावान्न ह्रस्वः। अवस्खादयति, परिस्खादयतीत्यत्र तु मित्वाद्ध्रस्वो भवतीति तदाशयः। पूर्वमते अवपरिभ्यां परस्य मित्वनिषेधात् 'अवस्खादयति, इत्यत्र न ह्रस्वः। प्रस्खादयतीत्यत्र तु अवपरिपूर्वकत्वाऽभावेन मित्वनिषेधाऽभावाद्ध्रस्व इति विपरीतम्। तस्मात्—'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्याञ्चे'ति सूत्रद्वयं उक्तदिशा मित्वनियमविध्याश्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलितः। यद्यपि 'न पादम्याङिति' सूत्रव्याख्यानाऽवसरे 'यमोऽपरिवेषणे' इति मित्वं प्रतिषिध्यत' इति वृत्तिन्यासयोरुक्तत्वान्नेदं समीचीनम्मतमिति प्रतीयते तथापि 'पर्यवसितं नियमयन्नि'त्यादिसामञ्जस्यात्तावेवोपेक्ष्याविति केचित्समर्थयन्ति।

**'न कम्यमिचमाम्' इत्यतो न उत्तरत्रानुवर्तते न वेति**—स्वामी 'न कम्यमिचमाम्' इति सूत्रात् शमो दर्शने इत्यादिसूत्रत्रये नञ्पदस्यानुवृत्तिं न करोतीति स्वामिमते—आयामयतीति उदाहरणे आयमयतीति स्यात्। यमयतीति प्रत्युदाहरणे यामयति ब्राह्मणानिति स्यात्। एवमवस्खादयति परिस्खादयतीत्युदाहरणे अवस्खदयति परिस्खयदयतीति स्यात्। प्रत्युदाहरणे च प्रस्खादयतीति स्यात्। एवञ्च पर्यवसितं नियमयन्निति प्रयोगः साधुरेव। नञ्पदानुवृत्तौ तु यमोऽपरिवेषणे 'स्खदिरवपरिभ्याञ्च' इति सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः। इदं च स्वामिमतं वृत्तिन्यासादिविरोधाद्धेयमेव।

**रेजे** ( ई० ३७ )—दीप्त्यर्थक-ऋकारेत्संज्ञक-राज् धातोर्लिटि तत्स्थाने स्वरितत्वेन 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन वैकल्पिके आत्मनेपदे तप्रत्यये द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यासह्रस्वे 'टित आत्मनेपदानां टेरे' इत्यनेन टेरेत्वे 'फणां च सप्तानाम्' इत्यनेन विकल्पेनैत्वाभ्यासलोपयोः कृतयोः 'रेजे' इति सिद्धम्। न च 'फणां च सप्तानाम्' इत्यत्र 'अत एकहल्मध्ये' इत्यादिना अतोऽनुवृत्या कथमत्रैत्वाभ्यासलोपाविति वाच्यम्, विधानसामर्थ्येनात एत्वावगमात्। एतदभावे तु 'रराजे' इति रूपं भवति।

**टु भ्राजृ दीप्तौ इति धातोरुभयत्र पाठे को विशेषः**—भ्राज्धातोः फणादौ पाठः 'फणाञ्च सप्तानाम्' इति सूत्रेण एत्वाभ्यासलोपार्थः। पूर्वं पाठस्तु 'व्रश्चभ्रस्ज०' इति सूत्रेण प्राप्तस्य षत्वस्य निषेधार्थः। तत्र हि राज्धातुः फणादिगृह्यते, तत्साहचर्याच्च भ्राज्धातुरपि फणादिरेव ग्राह्यः, इति पूर्वपठितभ्राजधातुविषये षत्वाभावः सिद्ध्यतीति दिक्।

**अपप्तत्** ( ई० ३६ )—पतनार्थक लृकारेत्संज्ञक पत् धातोर्लुङि तत्स्थाने तिपि अडागमे अनुबन्धलोपे मध्ये शबादिकमपवाद्य च्लिप्रत्यये 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यनेन अङि 'अपत् अत्' इति दशायां 'पतः पुम्' इत्यनेनाङि परे पुमागमे अनुबन्धलोपे 'अपप्तत्' इति सिद्धम् ।

**भ्रेमतुः** ( ई० ३८ )—भ्रम्धातोर्लिटि तत्स्थाने तसि 'परस्मै पदानाम्–' इत्यनेन तसोऽतुसादेशे द्वित्वेऽभ्याससंज्ञायां हलादिशेषे प्राप्ते तम्प्रबाध्य 'वा जॄभ्रमुत्रसाम्' इत्यनेन विभाषया एत्वाभ्यासलोपयोः कृतयोः सस्य रुत्वे विसर्गे 'भ्रेमतुः' इति । पक्षे 'बभ्रमतुः' इति ।

**अभ्रमीत्** ( ई० ३७ )—भ्रम्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिजादेशे अनुबन्धलोपे आर्धधातुकत्वात् सस्य वलादिलक्षणेऽडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्येडागमे 'इट ईटि' इति सिचः सस्य लोपे सवर्णदीर्घे हलन्तलक्षणवृद्धौ प्राप्तायां 'ह्मयन्तक्षण–' इति तन्निषेधे 'अभ्रमीत्' इति ।

**परिसोढा** ( ई० ३९ )—परिपूर्वकमर्षणार्थक–'सह्' धातोर्लुटि तत्स्थाने तप्रत्यये मध्ये तासिप्रत्यये 'तिषसहलुभरुषरिषः' इतीडभावपक्षे 'लुटः प्रथमस्य डारौरसः' इत्यनेन तस्य डादेशे डित्वादभस्यापि टेर्लोपे हृस्वे ढत्वे तस्य 'झषस्तथोर्धोऽधः' इत्यनेन धत्वे तस्य ष्टुत्वे 'ढो ढे लोपः' इत्यनेन ढस्य लोपे 'स–ढा' इत्यवस्थायां 'सहिवहोरोदवर्णस्य' इत्यनेन सकारात्परस्याकारस्योत्वे सति 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इत्यनेन षत्वे प्राप्ते तस्य 'सो ढः' इत्यनेन निषेधे 'परिसोढे'ति सिद्धम् ।

**अरंस्त** ( ई० ४७ )—उकारेत्संज्ञकरम्धातोर्लुङि तत्स्थाने तप्रत्ययेऽडागमे मध्ये च्लौ तस्य सिचि मस्यानुस्वारे 'अरंस्त' इति । अनिट्कोऽयं धातुः । लिटि तु क्रादिनियमादिड् भवति ।

**विशीर्णतायामयमित्यादि** ( ई० ४१ )—लृकारेत्संज्ञकः शातनार्थकः 'शद्' धातुः । तत्रैवं जिज्ञासा भवति यदस्मादेव धातोः हेतुमण्यन्ताल्ल्युटि 'शदेरगतौ तः' इत्यनेन दकारस्य तकारे योरनादेशादि कृते शातनशब्दः, शातनञ्च विशीर्णतानुकूलो व्यापारः, एवञ्च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयते इत्युदाहरणमसङ्गतमित्यतः समाधानमाह–कौमुद्याम् विशीर्णतायामयमिति । विशरण इत्यर्थः । नन्वेवं शातनमित्यत्र हेतुमण्णिज्न स्यात्तथा च तत्प्रयोगो न युक्तिसह इति चेत् ?

सत्यम्, प्रयोजकव्यापारं विना विशरणस्याऽसंभवाच्छातननिर्देशः, तत्र ण्यर्थस्याविवक्षितत्वाद्विशरणमेव शद्धात्वर्थ इति भावः।

**अबोधिष्ट** ( ई० ४६ )—इरित्संज्ञक-बोधनार्थक-'बुध्' धातोर्लुङि तत्स्थाने तप्रत्ययेऽडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशेऽनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे गुणे ततः षत्वे ष्टुत्वे च कृते 'अबोधिष्ट' इति सिद्धम्। न चात्र 'दीपजनबुधपूरतायीप्यायीभ्योऽन्यतरस्याम्' इत्यनेन च्लेश्चिण् कुतो नेति वाच्यम्, पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात्। परस्मैपदे तु इरित्वाद्विकल्पेनाङादेशे 'अबुधत्', पक्षे 'अबोधीत्' इति रूपद्वयम्। नचोक्तस्थलेषु इर इत्वेन 'इदितो नुम् धातोः' इत्यनेन नुम् कथन्नेति वाच्यम्, इर इत्वेऽपि तदवयवस्येकारस्य प्रत्येकमित्वाभावान्नुमोऽप्राप्तेः।

**खायात्** ( ई० ३६ )—अवदारणार्थक उकारेत्संज्ञक खन् धातोराशीर्लिङि तत्स्थाने तिपि अनुवन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमेऽनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन सलोपे नकारस्य 'ये विभाषा' इत्यनेन आत्वे 'खायात्' इति सिद्धम्। आत्वाभावे 'खन्यात्' इति रूपं भवति।

**अगूहीत्** ( ई० ४१, ४५ )—ऊकारेत्संज्ञक-संवरणार्थक-गुह्-धातोर्लुङि परस्मैपदे-अगूहीत् अघुक्षत् इति रूपद्वयम्, आत्मनेपदे च-अगूढ, अघुक्षत इति रूपद्वयमिति चत्वारि रूपाणि। तथाहि—गुह्-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ ऊदित्वात् 'स्वरतिसूतिसूयतिधूमूदितो वा' इत्यनेन विकल्पेन इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे सलोपे सवर्णदीर्घे लघूपधगुणे प्राप्ते तमपवाद्य 'ऊदुपधाया गोहः' इत्यनेन ऊत्वे अगूहीत्, इति सिद्धम्। इडभावे—'शल इगुपधादनिटः क्सः' इत्यनेन च्लेः क्सादेशे हस्य ढत्वे गस्य भष्भावेन घत्वे 'षढोः कः सि' इति कत्वे ततः षत्वे क्षसंयोगे क्षे जाते 'अघुक्षत्' इति रूपम्। तङि क्सः सस्य 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इत्यनेन विकल्पेन लुकि ढत्वधत्वष्टुत्वढलोपदीर्घेषु जायमानेषु—'अगूढ' इति। क्सलुगभावे-ढत्वभष्भावकत्वषत्वेषु कृतेषु 'अघुक्षत' इति रूपम्।

**अगूढ** ( ई० ३७, ४१, ४७ )—संवरणार्थक-ऊकारेत्संज्ञक-गुह्-धातोर्लुङि तत्स्थाने आत्मनेपदे तप्रत्यये अडागमे मध्ये च्लिप्रत्यये तस्य 'शल इगुपधादनिटः क्सः' इत्यनेन क्सादेशे अनुबन्धलोपे कित्त्वेन गुणाभावे अजादित्वाभावात्

'ऊदुपधाया गोहः' इत्यनेन ऊत्वाभावे 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इत्यनेन क्सस्य लुकि अगुह् त इति दशायां 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इत्यनेन तस्य धत्वे तस्य ष्टुत्वे 'ढो ढे लोपः' इत्यनेन पूर्वढकारस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यनेन दीर्घे 'अगूढ' इति सिद्धम्। क्सस्य लुगभावे तु ढत्वभष्भावकत्वषत्वेषु कृतेषु 'अघुक्षत' इति रूपं भवति।

**अगुह्वहि** (ई० ३८)—गुह्धातोर्लुङि आत्मनेपदे वहिप्रत्यये अडागमे मध्ये च्लौ तस्य सिजादेशे प्राप्ते तम्प्रबाध्य 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे 'लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये' इत्यनेन क्सस्य लुकि 'अगुह्वहि' इति। अत्र 'उदुपधाया गोहः' इत्यनेन उत्वं तु न भवति, अजादिप्रत्ययपरत्वाभावात्। पक्षे तु ढत्वभषभावकत्वषत्वेषु कृतेषु अतो दीर्घे 'अधुक्षावहि' इति रूपं भवति।

**अशिश्रियत्** (ई० ४३)—ञकारेत्संज्ञक-सेवार्थक-श्रि-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन चङादेशेऽनुबन्धलोपे 'चङि' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे इयङि पररूपे 'अशिश्रियत्' इति सिद्धम्। तङि तु–'अशिश्रियत' इति रूपम्।

**भ्रियात्** (ई० ३७)—ञकारेत्संज्ञक-भरणार्थक-भृञ्धातोराशीर्लिङि परस्मैपदे तिपि अनुबन्धलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमेऽनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन सलोपे 'रिङ्शयग्लिङ्क्षु' इत्यनेन ऋतो ऋङादेशे 'भ्रियात्' इति सिद्ध्यति। न चात्र कृते 'रिङादेशे 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेन दीर्घः कुतो नेति वाच्यम्, एवं सति 'रीङ्ऋतः' इत्यनेनैव रीङादेशे कृते दीर्घसिद्धे ऋतो रिङ्विधानवैयर्थ्यापत्तेः।

**अभार्षीत्** (ई० ४४)—भृ-धातोर्लुङि प्रथमपुरुषैकवचने अभार्षीत्, अभृत, इति रूपद्वयम्। तथाहि–ञकारेत्संज्ञक-भरणार्थक-'भृ'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'अस्तिसिचोऽपृक्ते इत्यनेन ईडागमे 'सिचि वृद्धिः परस्मैपदेषु' इत्यनेन वृद्धौ रपरत्वे षत्वे सति 'अभार्षीत्' इति सिद्धम्। 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमस्तु न भवति, 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन निषेधात्। आत्मनेपदे तु 'अभृ स् त' इति स्थिते 'उश्च' इति गुणाभावे 'ह्रस्वादङ्गात्' इति सिज्लोपे 'अभृत' इति।

**धेयात्** ( ई० ५६ )—धेट् धातोराशीर्लिङि तिपि अनुबन्धलोपे 'आदे च उपदेशेऽशिति' इत्यात्वे यासुटि अनुबन्धलोपे 'स्कोः संयोगाद्योः–' इति सलोपे 'दाधा घ्वदाप्' इति घुसंज्ञायाम् 'एर्लिङि' इति एत्वे 'धेयात्' इति सिद्धम्।

**अदधत्, अधात्, अधासीत्** ( ई० ४१,४७,४५ )—'धेट् पाने' अस्माद्धातोर्लुङि तिप्यनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ तस्य सिजादेशे प्राप्ते तं प्रबाध्य 'विभाषा धेट्श्व्योः' इति चङि अनुबन्धलोपे 'चङि' इति द्वित्वे अभ्याससंज्ञायां ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'आतो लोप इटि च' इत्याल्लोपे 'इतश्च' इति तिप इकारलोपे 'अदधत्' इति। चङभावे च्लेः सिजादेशे 'विभाषा घ्राधेट्शाच्छासः' इति सिचो लुकि 'अधात्' इति। लुगभावपक्षे 'यमरमनमातां सक् च' इति च्लेः सकि इटि च कृते 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अधासीत्' इति च सिद्धं भवति।

**अग्लासीत्**—ग्लैधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ तस्य 'यमरमनमातां सक् च' इति सकि इटि च कृते अनुबन्धलोपे 'अग्ला स् इ त्' इति दशायाम् 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे तत्सिद्धिः।

**असासीत्** ( ई० ४६ )—'षै क्षये' इति धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे तिपि अडागमे अनुबन्धलोपे 'उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ 'यमरमनमातां सक् च' इति च्लेः सकि इटि च कृते 'अस्ति सिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'असासीत्' इति। सवर्णदीर्घे कर्तव्ये सिज्लोपस्यासिद्धत्वन्तु न 'सिज्लोप एकादेशे सिद्धो वाच्यः' इत्युक्तत्वात्। 'घुमास्था–' इति सिज्लोपस्तु न, तत्र स्यतेरेव ग्रहणात्।

**दायात्**—'दैप् शोधने' अस्माद्धातोराशीर्लिङि तिपि अनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे 'इतश्च' इति तिप इकारलोपे 'लिङाशिषि' इत्यार्धधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इत्यस्याऽप्राप्त्या 'किदाशिषि' इति यासुटः कित्वात् 'स्कोः संयोगाद्योः—' इति सलोपे 'दाधाघ्वदाप्' इत्यत्राऽदाप् इति पर्युदासेन घुत्वाऽभावात् 'एर्लिङ्' इति एत्वाभावे 'दायात्' इति।

**घ्रेयात्** ( ई० ४० )—गन्धोपादानार्थक 'घ्रा' धातोराशीर्लिङि तत्स्थाने तिपि अनुबन्धलोपे यासुडागमे च कृतेऽनुबन्धलोपे 'लिङाशिषि' इति सूत्रेणार्धधातुकत्वात् 'लिङः सलोपः–' इति सलोपाभावे स्कोरिति सकारद्वयस्यापि निवृत्तौ 'वाऽन्यस्य संयोगादेः' इत्यनेन विकल्पेनैत्वे 'घ्रेयात्' इति सिद्धम्। एत्वाभावे 'घ्रायात्' इति।

**स्थेयात्**—'ष्ठा गतिनिवृत्तौ' अस्माद्धातोर्लिङि तिपि 'धात्वादेः षः सः' इति सत्वे ष्टुत्वनिवृत्तौ 'स्था ति' इति स्थिते यासुटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'स्कोः संयोगाद्योः' इति सलोपे 'एर्लिङि' इत्येत्वे 'स्थेयात्' इति।

**नकारजावनुस्वारश्च**—'ष्ठा गतिनिवृत्तौ' इत्यत्र 'धात्वादेः—' इति षस्य सत्वे कृतेऽपि ष्टुत्वेन जातस्य ठकारस्य निवृत्तिः कथं स्यादित्यत आह—'नकारजौ' इति। धातुषु मध्ये झलि परतः यौ नकाराज्जातौ अनुस्वारपञ्चमौ, तथा च सकाराज्जातः शकारः, एवं षकारात् परो विद्यमानः सवर्गाज्जातः टवर्गोऽपि प्रकृतस्थितिं लभत इत्यर्थः। तेन 'ष्ठा' इत्यत्र षकारात् परः तवर्गस्थकारः मूलस्थितिं भजते, ठकारस्य थकाराज्जायमानत्वात् इति भावः।

**जह्वार** ( ई० ५३ )—ह्वृधातोर्लिटि तिपि णलि द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'ऋतश्च संयोगादेर्गुणः' इत्यनेन परत्वात् गुणे रपरे च कृते उपधावृद्धौ 'जह्वार' इति सिद्धम्।

**गुणोऽर्तिसंयोगाद्योः**—अत्र सूत्रे 'अङ्गस्य' इत्यधिकृतम्, 'रीङृतः' इत्यतः 'ऋत' इत्यनुवर्तते, 'अकृत्सार्वधातुकयोः' इत्यतः 'असार्वधातुक' ग्रहणमनुवर्तते—'आर्धधातुके' इति लभ्यते, 'रिङ्शयग्लिङ्क्षु' इत्यतः 'यकि' 'लिङि' इति च लभ्यते, 'अयङ् यि क्ङिति' इत्यतो 'यि' इति सप्तम्यन्तमनुवर्तते आर्धधातुकविशेषणात् तदादिविधिः। ततश्च—'अर्तेः संयोगादेरिदन्तस्य च गुणो यकि, यादावार्धधातुके लिङि च' इत्यर्थः सम्पद्यते। उदाहरणं तु 'ह्वर्यात्' इति।

**सस्वरिव** ( ई० ५६ )—शब्दोपतापार्थक 'स्वृ' धातोर्लिटि तत्स्थाने वसि 'परस्मैपदानाम्—' इति वसो वादेशे 'लिटि धातोः—' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे 'शर्पूर्वाः खयः' इति सस्य शेषे सति परमपि स्वरत्यादिति विकल्पमिटं बाधित्वा पुरस्ताद्विप्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः क्किति' इतोण्निषेधे प्राप्ते क्रादिनियमात् नित्यमिटि गुणे रपरत्वे च कृते उक्तं रूपं सिद्धम्।

**'सस्वरिव' इत्यत्रेडागमः केन भवतीति**—'आर्धधातुकस्येड्वलादेः' इत्यादिविधिशास्त्रेभ्यः प्राक् 'नेड्वशिकृति' 'श्र्युकः क्किति' इत्यादिसूत्राणां प्रकरणमाचार्येण कृतमिति तत्सामर्थ्येन परमपि 'स्वरतिसूति०' इत्यादिसूत्रं बाधित्वा 'श्र्युकः क्किति' इति निषेधः प्राप्तस्तमपि बाधित्वा क्रादिनियमान्नित्यमिट् भवतीति दिक्।

**सस्वरिम** ( ई० ४५, ४६ )—शब्दोपतापार्थक-'स्वृ'-धातोर्लिटि तत्स्थाने मस्प्रत्यये तस्य परस्मैपदानामित्यादिना मादेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे परमपि स्वरत्यादिविकल्पमिटं बाधित्वा पुरस्ताद्विप्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः क्किति' इत्यनेनेण्निषेधे प्राप्ते क्रादिनियमान्नित्यमिटि ततो गुणे रपरत्वे सति 'सस्वरिम' इति सिद्धम्।

**'अस्वारीत्' 'अस्वार्षीत्'** ( ई० ४५ )—शब्दोपतापार्थक 'स्वृ'–धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशेऽनुबन्धलोपे 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिकेडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन चेडागमे 'सिचि वृद्धिः परस्मैपदेषु' इत्यनेन वृद्धौ रपरत्वे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे सति 'अस्वारीत्' इति सिद्धम्। इडभावेऽपि 'सिचि वृद्धिरि'ति वृद्धौ रपरत्वे 'अस्तिसिचः' इतीडागमे षत्वे 'अस्वार्षीत्' इति।

**आरिथ** ( ई० ५६ )—'ऋ गतिप्रापणयोः' इति धातोर्लिटि सिपि थलि अनुबन्धलोपे द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इति सूत्रेण अभ्यास ऋवर्णस्य अत्वे हलादिशेषे 'अत आदेः' इति दीर्घे 'ऋच्छत्यृताम्' इति उत्तरखण्डस्य वृद्धौ रपरत्वे सवर्णदीर्घे 'इडत्त्यर्तिव्ययतीनाम्' इति सूत्रेण नित्यमिटि 'आरिथ' इति सिद्धम्।

**असावीत्** ( ई० ४४ )—प्रसवैश्वर्यार्थक–'षु'धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे तिप्यनुबन्धलोपे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'स्तुसुधुञ्भ्यः परस्मैपदेषु' इत्यनेन सिचः इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईटि 'सिचि वृद्धिः परस्मैपदेषु' इत्यनेन वृद्धौ अवादेशे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'असावीत्' इति। स्तुञ्धुञ्भ्यां निद्भूयां साहचर्यात्सुनोतेरेव ग्रहणपक्षे–'असौषीत्' इति।

**शृण्वन्ति** ( ई० ४३ )—श्रवणार्थक 'श्रु' धातोर्लटि तत्स्थाने झिप्रत्यये झस्य 'झोऽन्तः' इत्यनेनान्तादेशे शपमपवाद्य 'श्रुवः शृ च' इत्यनेन श्रुवः शृआदेशे श्नुप्रत्यये च कृते श्नोर्ङित्वाद्धातोर्गुणाभावे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्य-

नेनोवङि प्राप्ते 'हुश्नुवोः सार्वधातुके' इत्यनेन यणि 'ऋवर्णान्नस्य' इति णत्वे पररूपे 'शृण्वन्ति' इति सिद्धम् ।

**शृण्मः**—श्रुधातोर्लटि तत्स्थाने 'तिप्तस्झिः' इत्यादिना मसि 'श्रुवः शृ च' इति श्रुवः 'शृ' आदेशे चकारात् 'श्नु' प्रत्यये च कृते शकारस्येत्संज्ञायां लोपे च विहिते शित्वाद् सार्वधातुकत्वे 'सार्वधातुकमपित्' इति श्नोर्ङित्वे 'क्ङिति च' इति गुणनिषेधे 'शृ नु मस्' इति स्थिते णत्वे 'लोपश्चास्यान्यतरस्यां म्वोः' इति उकारलोपे सस्य रुत्वे विसर्गे 'शृण्मः' इति । लोपाऽभावे 'शृणुमः' इति च सिद्धं रूपं भवति ।

**शृणु**—श्रुधातोर्लोटि सिपि 'श्रुवः शृ च' इत्यनेन 'शृ' आदेशे चकारात् श्नुप्रत्यये च कृते श्नुप्रत्ययस्य शस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपे च जाते शित्वाद्सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वेन गुणाऽभावे 'सेर्ह्यपिच्च' इत्यनेन सेर्ह्यादेशे 'शृ नु हि' इत्यवस्थायां 'सार्वधातुकमपित्' इति हेर्ङित्वात् उकारस्य च गुणाभावे 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुकि णत्वे 'शृणु' इति सिद्धम् । तातङ्पक्षे 'शृणुतात्' इति भवति ।

**शृणुयुः**—श्रुधातोराशीर्लिङि तत्स्थाने झौ झेर्जुसि अनुबन्धलोपे 'श्रुवः शृ च' इति 'शृ' इत्यादेशे चकारात् श्नुप्रत्यये च कृते 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'यासुट्परस्मैपदेषु—' इति यासुटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'उस्यपदान्तात्' इति पररूपे सस्य रुत्वे विसर्गे 'शृणुयुः' इति सिद्धम् ।

**अगे** (ई० ३६)—गत्यर्थक ङकारेत्संज्ञक 'गा'-धातोर्लङि तत्स्थाने आत्मनेपदे इटि अनुबन्धलोपे 'तिङ्शित्सार्वधातुकम्' इत्यनेन सार्वधातुकसंज्ञायां शपि शपावितौ टिदादेशत्वाभावादेत्वाभावे सवर्णदीर्घे 'आद्गुणः' इत्यनेन गुणे च कृते 'अगे' इति सिद्धम् ।

**गेत, गासीष्ट** (ई० ३८)—ङकारेत्संज्ञक-'गा'-धातोर्विधिलिङि तत्स्थाने तप्रत्यये मध्ये शपि शपावितौ, 'गा अ त' इत्यवस्थायां सवर्णदीर्घे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमे अनुबन्धलोपे 'अतो येयः' इत्यनेन इयादेशे यलोपे 'आद्गुणः' इति गुणे 'गेत' इति सिद्धम् । आशीर्लिङि तु सीयुटि कृते 'सुट्तिथोः' इत्यनेन तस्य सुडागमे यलोपे षत्वे ष्टुत्वे च कृते 'गासीष्ट' इति रूपम्भवति ।

**अगास्त** ( ई० ४०, ४४ )—गाधातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे मध्ये च्लौ तस्य सिजादेशे 'अगास्त' इति । 'गाङ्कुटादिभ्यः' इत्यत्र इङादेशस्यैव गापो ग्रहणात् 'घुमास्था-' इति इत्वन्नेति ।

**ऊवे** ( ई० ३६, ४० )—शब्दार्थक ङकारेत्संज्ञक 'उ' धातोर्लिटि तत्स्थाने आत्मनेपदे 'त' प्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन ऐशत्वे कृते 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे-'उ उ ए' इत्यवस्थायां द्वितीयस्य उवर्णस्य 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यनेन उवङि कृते सवर्णदीर्घे 'ऊवे' इति निष्पन्नम् । न च उवङो बहिर्भूतप्रत्ययापेया बहिरङ्गत्वादन्तरङ्गे सवर्णदीर्घे 'ऊ ए' इति स्थिते उवङि सति 'उवे' इत्येवं स्यान्नतूक्तरूपमिति वाच्यम् , 'वार्णादाङ्गं बलीयः' इति परिभाषया उवङ् एव न्याय्यत्वात् ।

**ओषीष्ट** ( ई० ३८ )—शब्दार्थक-ङकारेत्संज्ञक-उ-धातोराशीर्लिङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इत्यनेन सीयुडागमे अनुबन्धलोपे यलोपे 'सुट् तिथोः' इत्यनेन तकारस्य सुडागमे अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इत्यनेन गुणे ततो द्वयोरपि सकारयोः षत्वे ष्टुत्वे च कृते 'ओषीष्ट' इति सिद्धम् ।

**प्रणिमयते** ( ई० ३७ )—प्रत्युपसर्गक-प्रणिदानार्थक-ङकारेत्संज्ञक-'मे' धातोर्लटि तत्स्थाने तप्रत्यये मध्ये शपि गुणेऽयादेशे टेरेत्वे 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' इत्यनेन णत्वे सति 'प्रणिमयते' इति सिद्धम् । नन्वत्र णत्वं दुर्लभम् , शिद्विषये आत्वाऽभावेन मारूपाऽभावात् । कृतात्वेऽप्यस्मिन् णत्वं दुर्लभमेव लक्षणप्रतिपदोक्तपरिभाषया, प्रतिपदोक्त-'मा' धातोरेव ग्रहणौचित्यात् । न च 'गामादाग्रहणेष्वविशेषः' इति परिभाषया कृतात्वस्य मेङोऽपि ग्रहणं स्यादिति वाच्यम् , तथासति मिनातिमिनोत्योरात्वे कृते 'प्रनिमाता प्रनिमास्यती'त्यादावप्यतिप्रसक्तिः स्यादिचेत् ? सत्यम् , णत्वविधायकशास्त्रे 'घुमे'त्यस्य स्थाने 'घुमाप्रकृतिमाङि'ति पठित्वा तत्र प्रकृतिशब्दस्य घुमाङ्प्रकृतिपरकत्वमाश्रित्य घौ, माङ्धातौ, घुमाप्रकृतौ च परत इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोः कृतात्वस्याऽपि ग्रहणस्य भाष्यकृताऽभ्युपगमेन प्रकृते दोषाऽभावात् ।

**प्रणिमयते इत्यत्र मारूपाभावात् णत्वं कथम्** ( ई० ३७ )—ननु प्रणिमयत इत्यत्र 'नेर्गदनद०' इति णत्वं न सम्भवति, शिद्विषये आत्वाभावेन

माङ्रूपाभावात् । तथा प्रणिमानशब्देऽपि णत्वं न सम्भवति, तत्र मेङः कृतात्वस्य लाक्षणिकमारूपत्वात् । 'गामादाग्रहणेष्वविशेषः' इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु मीनातिमिनोत्योरात्वे । प्रनिमाता प्रनिमास्यति इत्यत्रापि नेर्णत्वावत्तिरिति चेद् ? उच्यते । 'नेर्गदनद' इति णत्वविधौ घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठित्वा तत्र प्रकृतिशब्दस्य घुमाङ्प्रकृतिपरत्वमाश्रित्य घौ माङ्धातौ घुमाङ्प्रकृतौ च परतः इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोः कृतात्वस्यापि ग्रहणस्य भाष्यकृता अभ्युपगतत्वात् । एवञ्च प्रणिमयते इत्यत्र नाव्याप्तिः, मेङः कृतात्वमाकृतित्वे सति ङित्वात् । नापि मीनातिमिनोत्योरात्वे प्रनिमाता प्रनिमास्यतीत्यत्र अतिव्याप्तिः, मारूपस्य ङित्वाभावात् । एतच्च घुसंज्ञासूत्रे भाष्ये स्थितम् ।

**दिग्ये** ( ई० ४१, ४५, ४७ )—ङकारेत्संज्ञक-रक्षणार्थक-'दे' धातोर्लिटि तत्स्थाने तप्रत्यये तस्य एशादेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे प्राप्ते 'दयतेर्दिगि लिटि' इत्यनेन दिग्यादेशे च प्राप्ते तत्र विशेषविहितेन दिग्यादेशेन द्वित्वस्य बाधात् दिग्यादेश एव जाते यणि 'दिग्ये' इति सिद्धम् । पुनः प्रसङ्गविज्ञानात्सिद्धमिति परिभाषया पुनर्द्वित्वमपि विशेषविहित्वादेव न भवतीत्यवगन्तव्यम् । नन्वेवं 'प्यायः पी' इत्यादेरपि विहितत्वेन द्वित्वबाधः स्यादिति वाच्यम् , विषयसप्तमीमाश्रित्य लिडुत्पत्तेः प्रागेव पीभावादिप्रवृत्तेः, लक्ष्यानुसाराद् दिग्यादेशविधौ तु लिटीति परसप्तम्येव न तु विषयसप्तमीति भेदात् ।

**अदिथाः** ( ई० ४० )—रक्षणार्थक–ङकारेत्संज्ञक 'दे' धातोर्लुङि तत्स्थाने थास्प्रत्यये अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशेऽनुबन्धलोपे 'आदेच उदेशेऽशिति' इति सूत्रेणात्वे घुसंज्ञायां 'स्थाघ्वोरिच्च' इति सूत्रेणेत्वे सिचः कित्वे च कृते 'ह्रस्वादङ्गात्' इति सिज्लोपे सस्य रुत्वे विसर्गे 'अदिथाः' इति ।

**जुगुप्सते** ( ई० ४३, ४५, ४७ )—गोपनार्थक–गुप्–धातोर्निन्दागम्यमाने 'गुप्तिज्किद्भ्यः सन्' इत्यनेन सन्प्रत्ययेऽनुबन्धलोपे धात्वधिकारत्वाभावात्सनोरार्धधातुकत्वाभावेनेड्गुणयोरभावे 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तत्स्थाने त–प्रत्यये 'टित आत्मनेपदानां टेरे' इत्यनेन टेरेत्वे 'सन्यङोः' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इत्यनेन चुत्वे शपि अनुबन्धलोपे पररूपे 'जुगुप्सते' इति सिद्धम् ।

**जुगुप्साञ्चक्रे** ( ई० ३८, ४० )—गुप्धातोर्निन्दायां 'गुप्तिज्किद्भ्यः सन्' इति सूत्रेण सन् प्रत्यये अनुबन्धलोपे 'सनाद्यन्तेति' धातुसंज्ञायां लिटि 'सन्यङोः'

इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे, 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यनेन आमि, 'आमः' इत्यनेन लिटो लुकि ततः 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिटपरक-'कृ'-इत्यस्यानुप्रयोगे लिटः स्थाने तप्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशे द्वित्वादिके कृते 'जुगुप्साञ्चक्रे' इति सिद्धम् ।

**मीमांसते** ( ई० ३९, ४१ )—'मन्' धातोः जिज्ञासायां 'मान्वधदानशान्भ्यो दीर्घश्चाभ्यासस्य' इत्यनेन सन्प्रत्यये 'सन्यङोः' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे अभ्यासह्रस्वे 'सन्यतः' इत्यनेनेत्वे 'मान्वधेत्यनेनैवाभ्यासदीर्घे 'नश्चापदान्तस्य झलि' इत्यनेनानुस्वारे मीमांसेत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तत्स्थाने तप्रत्यये मध्ये शपि 'अतो गुणे' इत्यनेन पररूपे टेरेत्वे कृते 'मीमांसते' इति सिद्धम् ।

**परिषस्वजे** ( ई० ५३ )—परि-उपसर्गात् ष्वज्धातोर्लिटि 'धात्वादेः षः सः' इति सत्वे लिटः स्थाने आत्मनेपदे तप्रत्यये द्वित्वेऽभाससंज्ञायां हलादिशेषे तप्रत्ययस्य एशादेशे 'परिनिविभ्यः' इति षत्वे 'परिषस्वजे' इति । उत्तरखण्डस्य सस्य षत्वन्तु न, 'सदेः परस्य लिटि' इति षत्वनिषेधसूत्रे 'स्वञ्जेरुपसंख्यानम्' इति वार्तिकोक्तत्वात् ।

**परिष्कण्णः** ( ई० ४५, ४६, ४७ )—परिपूर्वकात् 'स्कन्द्'-धातोः क्तप्रत्ययेऽनुबन्धलोपे 'अनिदितां हल उपधायाः क्ङिति' इत्यनेन नलोपे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेन निष्ठातकारस्य तत्पूर्वदकारस्य च नत्वे 'परेश्च' इत्यनेन वैकल्पिकषत्वपक्षे प्रथमनकारस्य रेफापेक्षया भिन्नपदस्थत्वेऽपि षात्परत्वाण्णत्वे द्वितीयनकारस्य ष्टुत्वेन णत्वे सति 'परिष्कण्णः' इति रूपं सिद्धम् । नचात्र निमित्तनिमित्तिनोरेकपदस्थत्वात् दकारस्थानिकनकारस्य षकारनिमित्तकं णत्वमन्तरङ्गं तदपेक्षया परीत्युपसर्गात्मकपदान्तरस्थमिणं निमित्तीकृत्य प्रवर्त्तमानं बहिरङ्गमिति 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयाऽन्तरङ्गे णत्वे कर्त्तव्ये बहिरङ्गस्य षत्वस्याऽसिद्धत्वात्षात्परत्वाभावेन कथं णत्वमिति वाच्यम्, 'पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेने'ति भाष्येण धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात्, 'पूर्वं धातुः साधनेन युज्यते' इति स्वीकारे तु 'परिस्कन्नः' इति रूपम् । वस्तुतस्तु भाष्यनये त्रैपादिकेऽन्तरङ्गे परिभाषाया अप्रवृत्त्याऽस्मिन्पक्षेऽपि णत्वं भवत्येव अत एव 'अभिषिषेणयिषति, 'अभिषुणु' इत्यादयः भाष्यप्रयोगाः सङ्गच्छन्ते ।

**'परिष्कण्णः' इत्यत्र णत्वं न वेति**—'परिष्कन्दत्' इति स्थिते 'अनिदिताम्' इति नलोपे 'रदाभ्याम्' इति निष्ठातकारस्य तत्पूर्वदकारस्य च नत्वे सस्यानेन षत्वपक्षे प्रथमनकारस्य रेफापेक्षया भिन्नपदस्थत्वेऽपि षात् परत्वात् णत्वे द्वितीयनकारस्य ष्टुत्वेन णत्वे 'परिष्कण्णः' इति ननु दकारस्थानिकनकारस्य षकारनिमित्तकं णत्वमन्तरङ्गम्, निमित्तनिमित्तिनोरेकपदस्थत्वात्। षत्वं तु परि इत्युपसर्गात्मकपदान्तरस्थमिणं निमित्तीकृत्य प्रवर्तमानं बहिरङ्गम्। ततश्च णत्वे कर्तव्ये बहिरङ्गस्य षत्वस्यासिद्धत्वात् षात्परत्वाभावात् कथं णत्वमिति चेद्? उच्यते। पदद्वयाश्रयतया बहिरङ्गस्य षत्वस्यासिद्धत्वं यत्प्रसक्तं तन्नाश्रीयते। 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यभ्युपगमात्। पूर्वं धातुरुपसर्गेण सह युज्यते-सन्ध्यादिकार्यं लभते। पश्चात्-धातूपसर्गकार्यप्रवृत्त्यनन्तरं साधनेन युज्यते। पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण इति पक्षे तु षत्वस्य बहिरङ्गतया असिद्धत्वान्न णत्वमिति यावत्।

**गमिष्यति** ( ई० ४० )—गत्यर्थकगम्धातोर्लृटि तत्स्थाने तिपि अनुबन्धलोपे मध्ये शपमपवाद्य 'स्यतासीलृलुटोः' इत्यनेन स्यप्रत्यये 'गमेरिट् परस्मैपदेषु' इत्यनेन सकारादेरार्धधातुकस्य इडागमे षत्वे 'गमिष्यति' इति रूपम्। ( तसादौ न न कश्चिद्विशेषः )।

**अयंसीत्** ( ई० ४५ )—उपयमार्थक-'यम्'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'यमरमनमातां सक् च' इत्यनेन सकि इडागमे च कृते 'अस्तिसिचोऽपृक्ते' इत्यनेन चेडागमे 'इट ईटि' इत्यनेन सिज्लोपे 'वदव्रजहलन्तास्याऽचः' इत्यनेन हलन्तलक्षणवृद्धौ प्राप्तायां 'नेटि' इत्यनेन निषेधे मस्याऽनुस्वारे 'अयंसीत्' इति सिद्धम्।

**सजति**—सङ्गार्थक-'षञ्'-धातोर्लटि 'धात्वादेः षः सः' इत्यनेन सत्वे लटः स्थाने तिप्यनुबन्धलोपे मध्ये शपि शपावितौ शपः पित्वेन कित्वाऽभावात्तस्मिन्परे 'अनिदितां हल उपधाया क्ङिति' इत्यनेन नलोपाऽप्राप्तौ 'दंशसञ्जस्वञ्जां शपि' इत्यनेन अनुस्वारपरसवर्णयोरसिद्धत्वान्नलोपे कृते 'सजति' इति सिद्धम्।

**अदर्शत्** ( ई० ४२,४५ )—इरित्संज्ञक-प्रेक्षणार्थक-'दृश्' धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य 'इरितो वा' इत्यनेन विकल्पेनाङि ततो गुणनिषेधे प्राप्ते 'ऋदृशोऽङि गुणः' इत्यनेन गुणे रपरत्वे च सति 'अदर्शत्' इति रूपं सिद्धम्। अङभावे तु 'शल इगुपधादनिटः क्सः' इत्यनेन क्सादेशे प्राप्ते 'न दृशः' इत्यनेन निषेधे सिजादिके कृते 'अद्राक्षीत्' इति रूपं भवति।

**अकाक्षीत्** ( ई० ३८, ४०, ४४, ४६ )—विलेखनार्थक-'कृष्'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य नित्यसिजादेशे प्राप्ते तं प्रबाध्य 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इत्यनेन विकल्पेन सिजादेशे इचावितौ 'अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्' इत्यनेनामागमेऽनुबन्धलोपे यणि 'षढोः कः सि' इत्यनेन षस्य कादेशे सस्य षत्वे सवर्णदीर्घे च कृते 'अक्राक्षीत्' इति रूपं निष्पद्यते । सिचि अमभावपक्षे तु–'वदव्रजहलन्तस्याऽचः' इत्यनेन वृद्धौ रपरत्वादिजाते 'अकार्क्षीत्' इति रूपम् । सिजभावपक्षे च 'शल इगुपधादनिटः क्सः' इत्यनेन क्सादेशे अनुबन्धलोपे कित्वादमभावे गुणाभावे च सति 'अकृक्षत्' इति रूपम् ।

**अक्राष्टाम्**—विलेखनार्थक-'कृष्' धातोर्लुङि तत्स्थाने तस् प्रत्ययेऽडागमे 'तस्थस्थमिपां तान्तन्तामः' इत्यनेन तसस्तामादेशे मध्ये च्लिप्रत्यये तस्य 'शल इगुपधादनिटः क्सः' इत्यनेन क्सादेशे प्राप्ते 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्य' इत्यनेन विकल्पेन सिजादेशेऽनुबन्धलोपे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यनेन विकल्पेनामादेशे 'वदव्रजहलन्तस्याचः' इत्यनेन वृद्धौ 'झलो झलि' इत्यनेन सिज्लोपे ततः ष्टुत्वे 'अक्राष्टाम्' इति सिद्धम् । अमभावे–अकार्ष्टाम्, सिजादेशाभावे क्से तु–अकृक्षताम् इति रूपे भवतः ।

**अधाक्षीत्** ( ई० ४७ )—भस्मीकरणार्थक-'दह्'-धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे 'लुङ् लङ् लृङ्क्ष्वडुदात्तः' इत्यनेनाडागमेऽनुबन्धलोपे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ अनिट्कत्वेन वलादिलक्षणेटोऽभावे 'अस्तिसिचोऽपृक्ते' इत्यनेन ईडागमे 'वदव्रजहलन्तस्याऽचः' इत्यनेन वृद्धौ हस्य घत्वे दस्य 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इत्यनेन भषभावे घस्य जश्त्वे तस्य चर्त्वे सस्य षत्वे कृष्संयोगे क्षेजाते 'अधाक्षीत्' इति सिद्धम् ।

**ईजतुः** ( ई० ५६ )—यज्धातोर्लिटि तसि तसोऽतुसि 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्' इति न्यायात् द्वित्वात् प्राक् 'असंयोगाल्लिट् कित्' इत्युसः कित्त्वेन 'वचिस्वपियजादीनां किति' इति यजो यकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'इज् अतुस्' इति स्थिते 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति न्यायेन 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिःशेषः' इति अभ्यासजकारस्य लोपे 'इ इज् अतुस्' इति स्थिते सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'ईजतुः' इति ।

**ईजे** ( ई० ४५ )—देवपूजासङ्गतिकरणदानार्थक–'यज्–'धातोर्लिटि तत्स्थाने तप्रत्यये लिट्स्तझयोरेशिरेच्' इत्यनेन एशादेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे प्राप्ते 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्त्वात्तस्मिन्परे 'वचिस्वपियजादीनां किति' इत्यनेन सम्प्रासरणे च प्राप्ते द्वित्वात्परत्वात्सम्प्रसारणे पूर्वरूपे च कृते द्वित्वेऽभ्याससंज्ञायां हलादिशेषे सवर्णदीर्घे च विहिते 'ईजे' इति सिद्धम्। न च 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति परिभाषया कथं द्वित्वमिति वाच्यम्, पुनः प्रसङ्गविज्ञानात्तदक्षतेः।

**अयाक्षीत्**—'यज् देवपूजासंगतिकरणदानेषु' इत्यस्माद् धातोर्लुङि प्रथमपुरुषैकवचने तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे–च्लौ च्लेः सिचि इचि गते सिचः सस्यार्धधातुकत्वात् 'एकाच उपदेशेऽनुदात्तात्' इतीट्निषेधे 'इतश्च' इति तिप इकारलोपे तकारस्यापृक्तत्वात् 'अस्ति सिचोऽपृक्ते' इति ईटि 'अयज् स् ई त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'व्रश्चभ्रस्जसृजमृज' इति जस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे कात्परत्वात् सिचः सकारस्य 'आदेशप्रत्यययोः' इति षत्वे 'अयाक्षीत्' इति। आत्मनेपदे तु 'अयष्ट' इति भवति।

**उवोढ** ( ई० ४५ )—वह्धातोर्लिटि सिपि सिपो थलि अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इति इडभावे प्राप्तेऽपि क्रादिनियमान्नित्ये प्राप्ते 'उपदेशेऽत्वतः' इति तन्निषेधे थलः पित्वात् 'असंयोगाल्लिट् कित्' इत्यस्याप्राप्त्या कित्वाऽभावेन 'वचिस्वपी'ति सम्प्रसारणाऽभावे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे अभ्याससंज्ञायां 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासवकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हलादिः शेषः' इति अभ्याससम्बन्धिहकारस्य लोपे 'उ वह् थ' इति स्थिते 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति थस्य धत्वे 'ष्टुना ष्टुः' इति धस्य ष्टुत्वेन ढत्वे 'ढो ढे लोपः' इति पूर्वढकारस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे प्राप्ते तम्प्रबाध्य 'सहिवहोरोदवर्णस्य' इत्यकारस्य ओत्वे 'उवोढ' इति सिद्धम्।

**अवाक्षीत्**—वह्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे च्लौ सिचि इचि गते 'इतश्च' इति तिप इकारलोपे तस्यापृक्तत्वात् 'अस्तिसिचोऽपृक्ते' इति ईटि 'अवह् स् ई त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इति ढस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अवाक्षीत्' इति रूपं भवति। आत्मनेपदे 'अवोढ' इति भवति।

**अवोढाम्**—वह् धातोर्लुङि तसि तसः स्थाने तामादेशे 'लुङ्-लुङ्-इत्यडागमे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'वदव्रजे'ति वृद्धौ 'हो ढः' इति हस्य ढत्वे 'अवाढ् स् ताम्' इति स्थिते 'झलो झलि' इति सलोपे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे 'सहिवहोरोदवर्णस्य' इत्याकारस्यौत्वे 'अवोढाम्' इति।

**वत्स्यति** ( ई० ४५ )—निवासार्थक-'वस्'-धातोर्लृटि तत्स्थाने तिप्यनुबन्धलोपे शपमपवाद्य स्य प्रत्ययेऽनिट्कत्वेनेडभावे 'सः स्यार्द्धधातुके' इत्यनेन सस्य तत्वे कृते 'वत्स्यति' इति सिद्धम्।

**उवाय, ववौ** ( ई० ४६ )—ञकारेत्संज्ञकतन्तुसन्तानार्थक 'वे' धातोर्लिटि तिपि 'परस्मैपदानाम्' इति तिपो णलादेशे अनुबन्धलोपे 'वेञो वयिः' इति विभाषया वयादेशे द्वित्वेऽभ्याससंज्ञायां 'लिट्यभ्यासस्योभयेषाम्' इत्यनेन वस्य सम्प्रसारणे पूर्वरूपे 'अत उपधायाः' इति वृद्धौ 'उवाय' इति। नच यस्यैव सम्प्रसारणं कुतो नेति वाच्यम्, 'लिटि वयो यः' इति निषेधात्। नच वयादेशाऽभावेऽपि द्वित्वे सति अभ्यासस्य सम्प्रसारणे कृते 'अचो ञ्णिति' इति वृद्धौ आयादेशे 'उवाय' इति सिद्धत्येवेति चेत्! सत्यम्, ऊयतुः' इत्याद्यर्थमावश्यकत्वेन पूर्वमुपनिबद्धत्वादेवात्र वयादेशस्याभ्युपगमात्। वयादेशाभावपक्षे 'वचिस्वपि-' इत्यनेन 'लिट्यभ्यासस्योभयेषाम्' इत्यनेन च सम्प्रसारणे प्राप्ते 'वेञः' इत्यनेन तन्निषेधे 'आदेच उपदेशेऽशिति' इत्यनेन आत्वे द्वित्वे अभ्याससंज्ञायां ह्रस्वे 'आत औणलः' इत्यौत्वे 'वृद्धिरेचि' इति वृद्धौ 'ववौ' इति। आत्मनेपदपक्षे 'ववे' इति भवति।

**ऊयतुः** ( ई० ४६, ४७ )—ञकारेत्संज्ञक तन्तुसन्तानार्थक-वे-धातोर्लिटि तसि तस्यातुसादेशे 'वेञो वयिः' इत्यनेन वयादेशे 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्त्वे तस्मिन्परे ग्रहिज्येति यस्य सम्प्रसारणे प्राप्ते 'लिटि वयो यः' इत्यनेन तन्निषेधे वकारस्य सम्प्रसारणे पूर्वरूपे द्वित्वेऽभ्यासादिकार्ये 'ऊयतुः' इति सिद्धम्। 'वश्चास्याऽन्यतरस्यां किति' इत्यनेन वयो यस्य विकल्पेन वत्वे तु 'ऊवतुः, वयादेशाऽभावे 'वेञः' इत्यनेन सम्प्रसारणनिषेधे आत्वे द्वित्वे ह्रस्वे आल्लोपे सति 'ववतुः' इति।

**ऊवतुः** ( ई० ४६, ४७ )—तन्तुसन्तानार्थक-ञकारेत्संज्ञक-'वे'-धातोर्लिटि तत्स्थाने तसि तस्यातुसादेशे 'वेञो वयिः' इत्यनेन धातोर्वयादेशे 'वय् अतुस्'

इत्यवस्थायां द्वित्वे प्राप्ते, असंयोगाल्लिट् कित्' इति लिटः कित्वेन 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन 'न सम्प्रसारणे सम्प्रसारणम्' इति लिङ्गादन्त्यस्य यणः पूर्वं सम्प्रसारणमिति विज्ञानात् यस्य सम्प्ररणे च प्राप्ते 'सम्प्रसारणं तदाश्रयकार्यं च बलवत्' इति नियमेन सम्प्रसारणस्यैव प्राप्तौ सत्यां 'लिटि वयो यः' इत्यनेन तस्य निषेधे वस्यैव सम्प्रसारणे 'सम्प्रसारणाच्चे'ति पूर्वरूपे द्वित्वादिके कृते यस्य 'वश्चास्यान्यतरस्यां किति' इत्यनेन वत्वे 'ऊवतुः' इति, पक्षे 'ऊयतुः' इति भवति।

**ऊयुः, ववुः** (ई० ४५,५४)—ञकारेत्संज्ञक-तन्तुसन्तानार्थक-'वे'-धातोर्लिटि तत्स्थाने झिप्रत्यये तस्य परस्मैपदानामित्यादिना उसादेशे 'वेञो वयिः' इत्यनेन वैकल्पिक वयादेशे 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन वस्य यस्य वा सम्प्रसारणमिति शंसये 'न सम्प्रसारणे सम्प्रसारणमि'ति लिङ्गादन्त्यस्य यणः पूर्वं सम्प्रसारणमिति विज्ञानाद्यकारस्यैव सम्प्रसारणे प्राप्ते 'लिटि वयो यः' इत्यनेन तन्निषेधे सति वस्यैव सम्प्रसारणे 'सम्प्रसारणाच्च' इत्यनेन पूर्वरूपे च जाते द्वित्वेऽभ्याससंज्ञायां हलादिशेषे सवर्णदीर्घे सस्य रुत्वे विसर्गे 'ऊयुः' इति सिद्धम्। 'वश्चास्याऽन्यतरस्यां किति' इत्यनेनाऽपि वयो यस्य वैकल्पिकत्वे 'ऊवुः' इति रूपम्। वयादेशाऽभावे 'ग्रहिज्येति' प्राप्तसम्प्रसारणस्य 'वेञः' इत्यनेन निषेधे सति 'ववुः' इति रूपम्। आत्मनेपदे तु ऊयिरे, 'ऊविरे' इति रूपे भवतः।

**विव्याय** ( ई० ४५,४७ )—'व्येञ् संवरणे' इति धातोर्लिटि तत्स्थाने तिपि 'परस्मैपदानामि'त्यादिना णलादेशे अनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे प्राप्ते 'न व्यो लिटि' इति तन्निषेधे 'अचो ञ्णिति' इति वृद्धौ 'व्यै अ' इति स्थिते 'लिटि धातोः—' इति द्वित्वे अभ्याससंज्ञायां 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासगकारस्य सम्प्रसारणे पूर्वरूपे 'विव्यै अ' इति स्थिते ऐकारस्य आयादेशे 'विव्याय' इति सिद्धम्। नचात्र सम्प्रसारणात् प्राक् परत्वाद्धलादिशेषेण यकारस्य निवृत्तौ ततः वकारस्य सम्प्रसारणे उकारे सति 'उव्याय' इति रूपमापद्येतेति वाच्यम्? उभयेषां ग्रहणसामर्थ्येन परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणविधानेनाऽदोषात्। अन्यथा 'लिट्यभ्यासस्ये'त्यत्र 'वचिस्वपियजादीनामि'त्यस्य 'ग्रहिज्ये'त्यादिसमग्रसूत्रस्य च स्वरितत्वादनुवृत्त्यैव सिद्धे उभयेषां ग्रहणस्य वैयर्थ्यं वारयितुं

कः सक्नुयात्? नचैवमपि वस्यैवाऽनेन सम्प्रसारणं कुतो नेति वाच्यम्? न 'सम्प्रसारणे सम्प्रसारणम्' इति लिङ्गेन पूर्वं यस्यैव सम्प्रसारणावगतेः।

**विव्याय**—व्येधातोर्लिटि तिपि णलि व्ये अ इति स्थिते 'अचो ञ्णिति' इति वृद्धौ 'व्यै अ' इति जाते, ननु तत्र द्वित्वे 'लिट्यभ्यासस्य—' इत्यभ्यासे यकारस्य सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे 'विव्याय' इति रूपं भवति, तदयुक्तम्, सम्प्रसारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणे उकारे सति 'उव्याय' इत्यापत्तेरिति चेद्? न। परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्, उभयेषां ग्रहणसामर्थ्यात्। अन्यथा वाच्यादीनां ग्रह्यादीनाञ्चानुवृत्त्यैव सिद्धे किन्तेनेति।

**जुहाव** ( ४५ )—स्पर्द्धा तथा शब्दार्थक-ञकारेत्संज्ञक-'ह्वे'-धातोर्लिटि तत्स्थाने तिपि तस्य णलादेशेऽनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यनेनात्वे ततो 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे प्राप्ते 'अभ्यस्तस्य च' इत्यनेनाभ्यस्तसंज्ञा-भविष्यतो ह्वेञः सम्प्रसारणविधानेन द्वित्वं बाधित्वा परत्वात्सम्प्रसारणे जाते 'सम्प्र-सारणाच्च' इत्यनेन पूर्वरूपे पुनः प्रसङ्गविज्ञानात्' पुनर्द्वित्वेऽभ्याससंज्ञायां 'कुहोश्चुः' इत्यनेनाभ्यासस्य चुत्वे तस्य जश्त्वे 'अचो ञ्णिति' इत्यनेन वृद्धावावादेशे 'जुहाव' इति सिद्धम्।

**'ह्वेञ्' धातोर्लुङि** ( ई० ४४, ४६, ५६ )—प्रथमपुरुषैकवचने अह्वत्, अह्वत, अह्वास्त इति रूपत्रयम्। तथाहि स्पर्धा-शब्दार्थक-ञकारेत्संज्ञक 'ह्वे' धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे 'आदेच उपदेशेऽशिति' इत्यनेन आत्वे मध्ये च्लिप्रत्यये तस्य सिजादेशे प्राप्ते तमपवाद्य 'लिपिसिचिह्वश्च' इत्यनेन अङि अनुबन्धलोपे 'आतो लोप इटि च' इत्यनेन आल्लोपे 'अह्वत्' इति सिद्धम्। आत्मनेपदे तु—विकल्पेन 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेन च्लेरङि आल्लोपे 'अह्वत' इति रूपम्। अङभावे तु-अनिट्कत्वेन वलादिलक्षणेडभावेऽपृ-क्तत्वाभावात् 'अस्ति सिच' इत्यनेनाऽपीडभावे 'अह्वास्त' इति सिद्धम्भवति।

**शुशाव, शिश्वाय** ( ई० ४६ )—श्विधातोर्लिटि तिपि णलि 'लिट्यभ्यास-स्योभयेषाम्' इति अभ्याससम्प्रसारणं बाधित्वा द्वित्वात् प्रागेव 'विभाषा श्वेः' इत्यनेन परत्वात् सम्प्रसारणे कृते ततो द्वित्वे वृद्धौ आवादेशे 'शुशाव' इति। 'विभाषा श्वे' इति विकल्पपक्षे द्वित्वे अभ्यासत्वे 'लिट्यभ्यासस्योभयेषाम्' इति नित्यं

सम्प्रसारणे प्राप्ते 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' इति निषेधे हलादिशेषे वृद्धौ आयादेशे 'शिश्वाय' इति सिद्धं भवति।

**श्वयतेर्लुङि** ( ई० ४०,४२,४६,४७ )—अश्वत्, अश्वताम्, अश्वन्, अश्वः, अश्वतम्, अश्वत, अश्वम्, अश्वाव, अश्वाम। अशिश्वियत्, अशिश्वियताम्, अशिश्वियन् अशिश्वियः, अशिश्वियतम्, अशिश्वियत, अशिश्वियम्, अशिश्वियाव, अशिश्वियाम। अश्वयीत्, अश्वयिष्टाम्, अश्वयिषुः, अश्वयीः, अश्वयिष्टम्, अश्वयिष्ट, अश्वयिषम्, अश्वयिष्व, अश्वयिष्म, इति रूपाणि। तथाहि—टु ओ इत्संज्ञक-गतिवृद्ध्यर्थक-श्विधातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति सूत्रेणाङि 'श्वयतेरः' इति इकारस्याकारे पररूपे 'अश्वत्' इति। अङभावे–विभाषा धेट्श्व्योः' इति च्लेश्चङि द्वित्वेऽभ्याससंज्ञायां हलादिशेषे इयङि 'अशिश्वियत्' इति। चङभावे च च्लेः सिजादेशे 'सिचि वृद्धिरि'ति वृद्धौ प्राप्तायां ह्ययन्तेति निषेधे 'आर्धधातुकस्येड्वलादेः' इति इडागमे, 'अस्तिचोऽपृक्ते' इतीडागमे 'इट ईटि' इति सलोपे दीर्घे गुणेऽयादेशे 'अश्वयीत्' इति, एवमन्यान्यपि रूपाणि ज्ञेयानि।

**आर्तीत्** ( ई० ४५ )—ऋतिः सौत्रो धातुस्तस्माल्लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागममपवाद्य 'आडजादीनाम्' इत्यनेनाडागमे 'आटश्च' इत्यनेन वृद्धौ रपरत्वे मध्ये च्लिप्रत्यये तस्य सिजादेशेऽनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे 'अस्तिसिचोऽपृक्ते' इत्यनेन चेडागमे 'इट ईटि' इत्यनेन सिज्लोपे सवर्णदीर्घे 'आर्तीत्' इति सिद्धम्।

## ( भ्वादिपरिशिष्टम् )

**'कथं उदयति'** (पृ० १०४)-ननु अयधातुरात्मनेपदे पठित इति शानच्प्रत्ययस्यैव युक्तत्वेनोदयतीति शतृप्रत्ययान्तप्रयोगः कथमिति चेद्? न, कटीत्यत्र प्रश्लिष्टस्य ईधातोः प्रयोगस्य सत्वात्। अथवा चक्षिङ्धातौ इकाररूपानुदात्तस्वरेणैवात्मनेपदे सिद्धे ङकारोपादानं व्यर्थं सद् 'अनुदात्तेत्वनिमित्तकमात्मनेपदमनित्यं भवति' इति बोधयति। तेन अयधातोरनुदात्तत्वेऽपि उक्तवचनेन शतृप्रत्ययस्य सिद्धिरिति स्वांशे चारितार्थ्यम्। अन्यत्र फलन्तु 'स्फायन्' इत्यत्र अनुदात्तेत्वलक्षणात्मनेपदस्याभाव इति बोध्यम्।

**'घस्लृ-अदने' अस्य प्रयोगः कस्मिन् लकारे भवति** (पृ० १०७)—घस्लृ-अदने अयं न सार्वत्रिकः यद्ययं सार्वत्रिकः स्यात् तदा लिट्यपि प्रयुज्येत । ततश्च 'अद भक्षणे' इति धातोः 'लिट्यन्यतरस्याम्' इति घस्लृभावविधिर्व्यर्थः स्यात् । ननु असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेति चेद् ? यत्र घस्लृधातोः प्रयोगे ज्ञापकप्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोगः । यथा—भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः । न च धातुसंज्ञार्थः पाठः इति शङ्क्यम् , द्युत दीप्तावित्यतः प्राक् पाठेनैव सिद्धे अत्र क्रमे तत्पाठवैयर्थ्यात् । लृकारोपादानम् अङि प्रयोगं बोधयति । अनिट्कारिकासु पाठो वलाद्यार्धधातुके प्रयोगं बोधयति । 'सृघस्यदः क्मरच्' इति सूत्रं क्मरच्प्रत्ययविषये प्रयोगो भवतीति बोधयति । एवञ्च—लिङ्गवचनाभावादाशिष्यस्याप्रयोगः ।

**स्यन्दू प्रस्रवणे** ( पृ० १०८ ) **धातोर्लृटि शङ्कानिरासपूर्वकं रूपं प्रसाधय**—ननु लृटि स्ये सति 'वृद्भ्यः स्यसनोः' इति परस्मैपदपक्षे परत्वादूदिल्लक्षणमिड्विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' इति इण्निषेधे स्यन्त्स्यतीत्येव रूपमिष्यते, न तु स्यन्दिष्यति इति । तदयुक्तम् , अन्तरङ्गतया ऊदिल्लक्षणस्यैव इड्विकल्पस्य उचितत्वात् सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षतया च 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधस्य बहिरङ्गत्वादिति चेद् ! न, 'वृद्भ्यः स्यसनोः' इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधः, चतुर्ग्रहणसामर्थ्यात् । यदि ह्यत्र ऊदिल्लक्षण इड्विकल्प एव स्यात् , न तु 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधः, तर्हि चतुर्भ्यः इति व्यर्थं स्यात् । न च कृपूव्यावृत्तिस्तत्फलमिति शङ्क्यम् , 'तासि च क्लृपः' इति चकारेण सकाराद्यार्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात् । तथा च चतुर्ग्रहणं चपुर्णामपि सर्वत्र इण्निषेधार्थमिति दिक् ।

**'मत्स्योदके अनुष्यन्देते' इत्यत्र षत्वं कथम्** ( पृ० १०९ )—ननु 'मत्स्योदके अनुष्यन्देते' इत्यत्र कथं षत्वं प्राणिकर्तृकत्वस्याऽपि सत्वादिति चेदुच्यते—अप्राणिषु इति पर्युदासात् मत्स्योदके अनुष्यन्ते इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिकर्तृकस्य नेति न प्रतिषेधः, येनात्र प्राणिकर्तृकत्वस्यापि सत्वात् षत्वं न स्यात् । किन्तु प्राणिभिन्नकर्तृकस्येति पर्युदास आश्रीयते । एवञ्च प्राण्यप्राणिकर्तृकस्यापि अप्राणिकर्तृकत्वानपायादिह षत्वं निर्बाधमिति दिक् ।

**'कमलवनोद्घाटनम्' अत्र शङ्कासमाधानं निरूप्यताम्** (पृ. ११०)–
ननु धातुपाठेऽर्थनिर्देशस्योपलक्षणत्वादर्थान्तरवृत्तेरपि घटधातोर्घटादिकार्यम्भवत्येव, अत एव घटयति विघटयतीत्यादावपि—संश्लेषयति विश्लेषयतीत्याद्यर्थेऽपि ह्रस्वः प्रवर्तते। एवञ्च विकसनार्थेऽपि उद्घाटनमित्यादिषु घटधातोर्णौ मित्वात् ह्रस्वः स्यादिति शङ्काकर्तुराशयः। समाधित्सोस्त्वयमाशयः—चुरादौ 'घट सङ्घाते' इति धात्वन्तरम्, तस्य णौ मित्वाभावादुपधाह्रस्वाभावे उद्घाटनं प्रविघाटयेत्यादिरूपम्। अर्थनिर्देशस्योपलक्षणतया सङ्घातादन्यत्र विकसनेऽपि तस्य वृत्तिरिति। न च चौरादिकस्य घट चेष्टायामित्यस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम्। 'नान्ये मितोऽहेतौ' इति निषेधात्। अहेतौ—स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेति तदर्थः।

**'विव्यथे' इति शङ्कानिरासपूर्वकं प्रसाधय** (पृ. ११०)—व्यथ् व्यथ् ए इतिस्थिते 'सत्यपि सम्भवे बाधनं भवति' इति वचनेन यलोपविषये हलादिशेषलभ्यं यकारस्य लोपं बाधित्वा 'व्यथो लिटि' इति सूत्रेण सम्प्रसारणे थकारस्य 'हलादिशेषः' इति लोपे 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधे च कृते 'विव्यथे' इति रूपम्। न च 'अभ्यासविकारे बाध्यबाधकभावो नास्ति' इति वचनेन 'हलादिशेषापवादः' इति ग्रन्थासङ्गतिरिति वाच्यम्। 'लिट्यभ्यासस्योभयेषाम्' इति सूत्रे उभयेषां ग्रहणसामर्थ्येन अभ्यासलोपविषये उक्तवचनाप्रवृत्तेः।

**'विज्ञापना भर्तृषु सिद्धिमेति' 'तज्ज्ञापयत्याचार्यः' इत्यत्र च 'मितां ह्रस्वः' इति कस्मान्न प्रवर्तते** (पृ. ११२)—घटादौ मित्त्वप्रकरणे 'मारणतोषणनिशामनेषु ज्ञा' इति पठितम्। तत्र निशामनं चाक्षुषज्ञानम् इति माधवः। अन्ये तु ज्ञापनमात्रम् अर्थमाहुः। हरदत्तादयस्तु निशामन इत्यत्र निशानेष्विति पेठुः। निशानञ्च तीक्ष्णीकरणम्। एष्वेवार्थेषु मित्त्वं नान्यत्रेत्यनेन नियम्यते। विज्ञापनेत्यत्र तज्ज्ञापयतीत्यत्र च अचाक्षुषज्ञानस्यैवात्मज्ञानस्य विवक्षितत्वात् मित्त्वाभावान्माधवमते ह्रस्वो न प्रवर्तते। बोधनमात्रे तु उक्तं रूपद्वयं ज्ञा नियोगे इति चौरादिकस्य बोध्यम्। धातूनामनेकार्थत्वाच्च तस्य ज्ञापने वृत्तिः। 'नान्ये मितोऽहेतौ' इति निषेधान्न मित्त्वम्। निशानेष्विति हरदत्तादीनां मते तु उक्तप्रयोगयोर्ज्ञापनार्थवृत्तित्वात् ज्ञापनस्य च मारणतोषणतीक्ष्णीकरणान्यत्वात् तस्मिन्नर्थे ज्ञाधातोर्मित्त्वप्रसक्तिरेव नास्तीति दिक्।

इति भ्वादिप्रकरणम्।

# अथ अदादिप्रकरणम्

**जघास** ( ई० ३६ )—अद्धातोर्लिटि तिपि णलि 'लिट्यन्यतरस्याम्' इति अदो 'घस्लृ' आदेशे अनुबन्धलोपे 'घस् अ' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्याससकारस्य लोपे 'कुहोश्चुः' इति घस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'अत उपधायाः' इति घकाराकारस्य वृद्धौ 'जघास' इति, घस्लादेशाऽभावपक्षे 'आद' इति भवति।

**जघसिथ** ( ई० ३७, ३४ )—अद्धातोर्लिटि सिपि थलि अनुबन्धलोपे 'लिटयन्यतरस्याम्' इति अदो घस्लादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्युपधासकारस्य लोपे 'कुहोश्चुः' इत्युपधाघकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जघस् थ' इति स्थिते 'ऋतो भारद्वाजस्य' इति इटि अनुबन्धलोपे 'जघसिथ' इति घस्लादेशाऽभावे 'आदिथ' इति।

**जक्षुः** ( ई० ३९, ४२ )—अद्धातोर्लिटि तत्स्थाने झौ झेर्जुसि 'लिटयन्यतरस्याम्' इति अदो 'घस्लृ' आदेशे अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अभ्याससकारस्य लोपे 'कुहोश्चुः' इति घस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'असंयोगाल्लिट् कित्' इति कित्वे 'गमहनजनखनघसां लोपः क्ङित्यनङि' इति उपधाऽकारस्य लोपे 'खरि च' इति घस्य चर्त्वेन ककारे 'शासिवसिघसीनां च' इति सस्य षत्वे सकारस्य रुत्वे विसर्गे 'जक्षुः' इति घस्लादेशाऽभावे तु 'आदुः' इति भवति। एवमेव 'जक्षतुः' इति।

**'जक्षतुः' इत्यत्र स्थानिवद्भावः कथं वारितः**—ननु 'जघस् अतुस्' इति स्थितौ 'गमहनजनखनघसाम्' इत्युपधालोपे तस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवत्त्वेन व्यवधानात् खरपरत्वाऽभावाच्चर्त्वाऽप्राप्त्या जक्षतुरिति न सिद्ध्येदिति चेद्? उच्यते। 'न पदान्तद्विर्वचन०' इति सूत्रेण चर्त्वं प्रति स्थानिवत्त्वनिषेधात् सर्वमुपपन्नमिति।

**आदुः**—घस्लादेशाऽभावपक्षे अद्धातोर्लिटि तत्स्थाने झौ झेर्जुसि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति दलोपे 'अत आदेः' इत्यभ्यासाऽकारस्य दीर्घे 'अत उपधायाः' इति उपधाऽकारस्य वृद्धौ सवर्णदीर्घे सकारस्य रुत्वे विसर्गे आदुः इति सिद्धम्।

**आद्**—घस्लादेशाऽभावपक्षे अद्धातोर्लिटि तिपि णलि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्युपधादकारस्य लोपे 'अ अद् अ' इति जाते 'अत आदेः' इत्याद्यकारस्य दीर्घे 'अत उपधायाः' इति वृद्धौ 'आ आद् अ' इति स्थिते सवर्णदीर्घे 'आद' इति सिद्धम् ।

**आदत्** ( ई० ४५ )—अद्धातोर्लङि तिपि अनुबन्धलोपे 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'आडजादीनाम्' इत्यङ्गस्याडागमे अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'इतश्च' इति तिप इकारलोपे 'अपृक्त एकाल्प्रत्ययः' इति तिपस्तकारस्याऽपृक्तसंज्ञायाम् 'अदः सर्वेषाम्' इत्यनेन अपृक्तसंज्ञकस्य तिपस्तकारस्याडागमे अनुबन्धलोपे 'आदत्' इति सिद्धम् ।

**अघसत्** ( ई० ५६ )—अद्धातोर्लुङि तत्स्थाने तिपि 'लुङ्लङ्—इत्यडागमे अनुबन्धलोपे 'लुङ्सनोर्घस्लृ' इति अदः स्थाने 'घस्लृ' इत्यादेशे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति च्लेरङि अनुबन्धलोपे 'इतश्च' इति तिपः इकारलोपे 'अघसत्' इति ।

**प्रहण्मि** ( ई० ४४ )—प्रोपसर्गकहन्धातोर्लटि तत्स्थाने मिपि शपि शपो लुकि 'वमोर्वा' इति णत्वे उक्तं रूपं सिद्धम् । पक्षे 'प्रहन्मि' इति ।

**जघ्नतुः**—हन्धातोर्लिटस्तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासनकारस्य लोपे 'कुहोश्चुः' इत्यनेन अभ्यासहकारस्य चुत्वेन झकारे 'अभ्यासे चर्च' इति झस्य जकारे 'ज हन् अतुस्' इति स्थिते 'असंयोगाल्लिट्कित्' इति अतुसः कित्त्वात् 'गमहनजनखनघसां लोपः क्ङित्यनङि' इति हन उपधाकारस्य लोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हनो हस्य कुत्वेन घत्वे सस्य रुत्वे विसर्गे तत्सिद्धिः ।

**जघनिथ**—हन्धातोर्लिटि सिपि सिपः स्थाने 'परस्मैपदानाम्' इति थलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यभ्यासनकारस्य लोपे 'कुहोश्चुः' इति चुत्वेन हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'ज हन् थ' इति स्थिते 'लिट् च' इति थलः आर्धधातुकत्वेन भारद्वाजनियमादिड्विकल्पे 'ज हन् इ थ' इति दशायाम् ञ्णित्प्रत्ययपरत्वाऽभावान्नकारपरत्वाभावाच्च 'हो हन्तेर्ञ्णिन्नेषु' इति सूत्राऽप्राप्तया 'अभ्यासाच्च' इति हस्य कुत्वेन घत्वे 'जघनिथ' इति । इडभावे 'जघन्थ' इति पूर्ववत् सिद्धं बोध्यम् ।

**जहि** ( ई० ४४ )—हन्धातोर्लोटि तत्स्थाने सिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'सेर्ह्यपिच्च' इति सिपः सस्य हौ 'हन् हि' इति जाते 'हन्तेर्जः' इति हनः स्थाने जादेशे 'जहि' इति। अत्र जादेशे कृते 'अतो हेः' इति अतः परस्य हेर्लुक् तु न भवति, असिद्धवदत्राभात्'(१) इत्यनेन जादेशस्यासिद्धत्वात्।

**वध्यात्** ( ई० ४६ )—'हन्'-धातोराशीर्लिङि आर्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव 'हनो वधलिङि' इत्यनेनाऽदन्तवधादेशे 'अतो लोपः' इत्यनेनाल्लोपे लिङः स्थाने तिप्यनुबन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमेऽनुबन्धलोपे 'सुट् तिथोः' इत्यनेन सुडागमे च सद्वयस्याऽपि 'स्कोः'रिति निवृत्तौ 'वध्यात्' इति सिद्धम्।

**अवधीत्** ( ई० ३७,४१,४४,५३ )—हन्धातोर्लुङि 'लुङि च' इति हनो वधादेशे लुङः स्थाने तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'अवध स् त्' इति जाते सिचः सस्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति इटि 'अतो लोपः' इति वधाकारस्य लोपे 'अवध् इ स् त्' इति स्थिते 'अस्तिसिचोऽपृक्ते' इति अपृक्ततकारस्य ईटि 'इट ईटि' इति सलोपे 'सिज्लोप एधादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अवधीत्' इति सिद्धम्।

**अद्विषुः** ( ई० ४५ )—द्विष्धातोर्लङि झौ अडागमे 'द्विषश्च' इत्यनेन झेर्जुसादेशेऽनुबन्धलोपे मध्ये शपि शपो लुकि सस्य रुत्वे विसर्गे 'अद्विषुः' इति।

**दुग्धः** (ई० ३७)—दुह्धातोर्लटि तसि सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'दादेर्धातोर्घः' इति हस्य घत्वे 'झषस्तथोर्धोऽधः' इति तस्य

---

(१) **असिद्धवदत्राऽऽभात्**—इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यादित्यर्थः। असिद्धवदत्राभात् ( ६।४।२२ ) इस सूत्रसे लेकर षष्ठ अध्यायके चतुर्थ पादकी समाप्ति पर्यन्त सभी सूत्र 'आभीय' कहलाते हैं। समानाश्रय आभीय कार्यके करनेमें कृत समानाश्रय आभीय कार्य असिद्ध हो। यही इस सूत्रका भावार्थ हुआ। उदाहरण जैसे 'जहि' यहाँ जकारके असिद्ध होनेसे अकारके परे 'हि' का 'अतो हेः' से लोप नहीं हुआ।

धत्वे 'झलां जश् झशि' इति धस्य जश्त्वेन गत्वे तसः अपित्त्वेन ङित्वात् 'क्ङिति च' इति गुणनिषेधे सस्य रुत्वे विसर्गे 'दुग्धः' इति।

**अधोक्**—दुह्धातोर्लङस्तिपि अनुबन्धलोपे शपो लुकि अङ्गस्याडागमे 'पुगन्तलघूपधस्य च' इति गुणे 'इतश्च' इति तिप इकारलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'अदोह्' इति जाते 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इति दस्य धत्वे घस्य जश्त्वे तस्य चर्त्वेन ककारे 'अधोक्' इति सिद्धम्।

**धुक्षीष्ट** (ई० ४७)—दुह्धातोराशीर्लिङि तत्स्थाने ते 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् गुणाऽभावे'लिङः सीयुट्' इति सीयुटि अनुबन्धलोपे 'लोपो व्योर्वलि' इति यलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इति भष्भावेन दस्य धत्वे घस्य जश्त्वे चर्त्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'धुक्षी त' इति जाते 'सुट् तिथोः' इति सुटि अनुबन्धलोपे सस्य षत्वे ष्टुत्वे च कृते 'धुक्षीष्ट' इति।

**अधुक्षत्** ( ई० ३७ )—दुह्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिजादेशं प्रबाध्य 'शल इगुपधादनिटः क्सः' इति क्सादेशे अनुबन्धलोपे 'अदुह् स ति' इति जाते 'इतश्च' इति इकारलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशः-' इति दस्य धत्वे 'अ धु घ् स त्' इति जाते घस्य जश्त्वे चर्त्वे सस्य षत्वे 'अधुक्षत्' इति सम्पन्नम्।

**अधुक्षाताम्** ( ई० २४ )—दुह्धातोर्लुङि आतामि अडागमे अनुबन्धलोपे च्लौ तस्य 'शल इगुपधादनिटः क्सः' इति क्सादेशे अनुबन्धलोपे 'अदुह् स आताम्' इति स्थिते 'क्सस्याचि' इत्यनेन 'अलोन्त्यस्ये'ति सहकारात् सस्याऽकारस्य लोपे अदुह् स् आताम्' इति जाते 'दादेर्धातोर्घः' इत्यनेन हस्य घत्वे 'एकाचः' इत्यनेन दस्य भष्भावेन धत्वे 'खरि च' इत्यनेन घस्य चर्त्वे अधुक् स् आताम्' इति स्थिते 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे क्सस्य कित्वाद् गुणाऽभावे- 'अधुक्षाताम्' इति जातम्।

**स्फायन्निति** ( ई० ३६,३७,४६ )—वृद्ध्यर्थक ईकारेत्संज्ञक स्फाय् धातोर्लटि तस्य 'लटः शतृशानचावप्रथमासमानाधिकरणे' इत्यनेन शत्रादेशेऽनुबन्धलोपे उगित्वान्नुमि प्रातिपदिकत्वात्सौ 'हल्ङ्या' दिना सुलोपे तकारस्य संयोगान्तलोपे

'स्फायन्नि'ति साधु । नलोपस्त्वत्र न भवति संयोगान्तलोपस्यासिद्धत्वात् । नन्वस्य अनुदात्तत्वेनात्मनेपदत्वात् ततः शानजादेशः स्यान्न तु शत्रादेशः तथा सति कथं रूपसिद्धिरिति चेत् ? चक्षिङो ङित्करणेन 'अनुदात्तत्वलक्षणमात्मनेपदमनित्यमि'ति ज्ञापनेनादोषात् । न च ङित्वन्तत्रात्मनेपदार्थमिति वाच्यम् , इकारस्याप्यनुबन्धत्वेन तत एव तस्य सुलभत्वात् । न चेकारस्येदित्वे 'इदितो नुम्धातोः' इत्यनेन नुमापत्तिरिति वाच्यम् , तत्र 'गोः पादान्ते' इत्यतः 'अन्ते' इत्यनुवर्त्य अन्ते इदिति व्याख्यानेनादोषात् । यदि तु अन्त्येकत्वव्याघातेन ङकारस्य चारितार्थ्यात् भाष्यानुक्तत्वाच्च ङकारोच्चारणमुक्तार्थेऽज्ञापकमिति विभाव्यते तदा 'स्फायन्नि'ति पृषोदरादित्वकल्पनया यथाकथञ्चित्समाधेयमिति मान्याः ।

**'चक्षिङ्' इत्यत्र ङित्वादेवात्मनेपदे सिद्धे इकारोच्चारणं किमर्थं**—ननु चक्षिङ् इत्यत्र इकारोच्चारणं व्यर्थम् । न च सुखोच्चारणार्थं तदिति वाच्यम् , अकारोच्चारणेनैव तत्सिद्धेः । नाप्यनुदात्तेत्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुम् , ङित्वादेव तत्सिद्धेरिति चेद् ? न, 'अनुदात्तेतश्च हलादेः' इति ल्युडपवादयुच्प्रत्ययार्थत्वात् । ततश्च 'विचक्षणः' इति प्रयोगः सिद्ध्यति, नुम् तु न भवति । यत्र धातौ इकारोऽन्तावयवो भवति, तत्रैव 'इदितो नुम् धातोः' इत्यनेन नुम्भवतीति व्याख्यानात् । एवञ्च इकारस्यानुदात्तत्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यनेनानुदात्तेत्निमित्तके आत्मनेपदे सिद्धे ङकारोपादानं व्यर्थमेव । तदेव व्यर्थं सत् 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति ज्ञापयति । तेन स्फायन्निति प्रयोगे शतृप्रत्ययस्य सिद्धिरिति दिक् ।

**'अत्र भाष्ये क्शादिरयमादेशः' इयं फक्किका व्याख्येया**—अत्रेदं तात्पर्यम्—'चक्षिङः ख्याञ्' इत्यनेन न चक्षिङः ख्याञादेशः, किन्तु क्शाञादेश एव, तेन पुंख्यानमित्यत्र न 'पुमः खय्यम्परे' इति रुत्वमित्यादि हल्सन्धावेवोक्तम् । असिद्धकाण्डे 'शस्य यो वा' इति स्थितम् इति तेन णत्वप्रकरणानन्तरमिति शेषः । अत एव शकारेण व्यवधानान्न 'कृत्यचः' इत्यनेन पर्याख्यानमित्यत्र णत्वम् । नापि सुप्रख्येन निर्वृत्तं सौप्रख्यम् , तत्र भवः सौप्रख्यीयः इत्यत्र यत्वासिद्धत्वेन 'धन्वयोपधाद्' इति वुञ् , किन्तु छप्रत्यय एवेति दिक् ।

**चक्शौ, चख्यौ** ( ई० ५६,३९ )—चक्षिङ्धातोर्लिटि 'चक्षिङः ख्याञ्—वा लिटि' इति चक्षिङः ख्याञादेशे ञित्वात् पदद्वयमध्ये परस्मैपदे लिटः स्थाने तिपि णलि अनुबन्धलोपे, उक्तसूत्रे भाष्ये 'क्शादिरयमादेशः' इत्यभिधाय 'ख्याञः शस्य यो

वा वक्तव्यः' इत्युक्तम् , तथा च तेन शस्य यत्वाभावपक्षे द्वित्वेऽभ्याससंज्ञायां "खर्पूर्वाः खयः' इति खयः शेषे अन्त्यलोपे च कृते 'कुहोश्चुः' इति अभ्यासस्य चुत्वे खस्य चर्त्वे 'आत औ णलः' इति णलः औत्वे वृद्धौ 'चक्शौ' इति । अत्र 'चयो द्वितीयाः शरि पौष्करशादेरिति वाच्यम्' इति कृतचर्त्वस्य कस्य खो न भवति, चर्त्वस्याऽसिद्धत्वात । शस्य यत्वपक्षे 'चख्यौ' इति । आत्मनेपदे तु 'चख्ये, चक्शे' इति रूपे भवतः । ख्याञादेशाभावे तु 'चचक्षे' इति भवति ।

**अख्यत्** ( ई० ४४,५३ )—चक्षिङ्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च 'चक्षिङः ख्याञ्' इति ख्यञादेशे अनुबन्धलोपे मध्ये च्लौ "अस्यति वक्तिख्यातिभ्योऽङ्' इति च्लेरङि 'आतो लोप इटि च' इत्यालोपे 'अख्यत्' इति । आत्मनेपदे 'अख्यत' इति पूर्ववत् । ख्यञादेशस्य भाष्ये क्शादित्वं प्रतिपादितं तस्यासिद्धकाण्डे 'शस्य यो वा' इत्यनेन विकल्पेन यत्वं विहितम् , तथा च यत्वाभावपक्षे परस्मैपदे अडागमे च्लेरङ्विधौ ख्यातीति यकारनिर्देशात् अङभावे आदन्तत्वेन 'यमरमनमातां सक् च' इति सकागमे इटि च कृते 'अस्ति-सिचोऽपृक्ते' इति ईडागमे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अक्शासीत्' इति । आत्मनेपदे तु 'अक्शास्त' इति ।

**ऐड्ढ्वम्** ( ई० ३६ )—स्तुत्यर्थक ईड्धातोर्लङि तत्स्थाने आत्मनेपदे ध्व-म्प्रत्यये मध्ये शपि शपो लुकि अडागमं प्रबाध्य 'आडजादीनाम्' इत्यनेन आडा-गमे 'आटश्च' इत्यनेन वृद्धौ 'ष्टुना ष्टु'रिति ष्टुत्वेन ढकारे 'ऐड्ढम्' इति सिद्धम् । ननु ईडिष्व, इडिध्वम् , इत्यत्र यथा एकदेशविकृतमनन्यवत्' इति न्यायेन इड् भवति, तथैवात्रापि 'ईडजनोर्ध्वे च' इत्यनेन कथन्नेट् इति चेत ! मैवम् , उक्त-न्यायेन हि प्रकृतिग्रहणे तदेकदेशविकृतस्य ग्रहणं भवति, न तु विकृतिग्रहणे तदेकदेशविकृताया अपि प्रकृतेर्ग्रहणमिति । यथा च 'पुरुषमानय' इत्युक्ते हि चक्षु-ष्मानचक्षुष्मान् वा पुरुष आनीयते, 'अन्धमानय' इत्युक्ते तु चक्षुरहित एवानीयते न तु चक्षुष्मान् । तथा च प्रकृते ध्वम एत्वे कृते ध्वेशब्दः तेन च विकृतेन तत्प्र-कृतिभूतस्याग्रहणेनेड् न भवतीति ज्ञेयम् ।

**आसाञ्चक्रे** ( ई० ४७ )—उपवेशनार्थक-'आस्'-धातोर्लिटि 'इजादेश्च गुरु-मतोऽनृच्छः' इत्यस्येजादित्वाऽभावेनाऽप्राप्तौ 'दयायासश्चे'ति सूत्रेणामि—'आमः' इत्यनेन लिटो लुकि 'कृञ्चाऽनुप्रयुज्यते लिटि' इत्यनेन लिटपरक 'कृ' इत्यस्यानुप्रयोगे 'लिटस्तझयोरेशिरेच्' इत्यनेनैशादेशे ततो द्वित्वादिकार्ये 'आसाञ्चक्रे' इति ।

**नमो वाकं प्रशास्महे** ( ई० ३७ )—आङ् पूर्वकः शास् धातुरिच्छायां वर्त्तते । 'आशास्ते, आशासाते' इत्याद्युदाहरणम् । नन्वाङ् पूर्वकस्यैवास्य प्रयोगे 'प्रशास्महे' इत्यादिरूपाणां कथं सिद्धिरिति चेत् ? सत्यम् , अत्राङ्पूर्वकस्य प्रायिकत्वात् । प्रकृतवाक्ये धातूनामनेकार्थत्वेन 'प्रशास्महे' इत्यस्य कुर्महे इत्यर्थो ज्ञेयः ।

**सुवै** ( ई० ३६, ५३ )—प्राणिगर्भविमोचनार्थकङकारेत्संज्ञक-सूधातोर्लोटि तत्स्थाने उत्तमपुरुषैकवचने आत्मनेपदे इटि अनुबन्धलोपे 'धात्वादेः षः सः' इत्यनेन सत्वे मध्ये शपि शपो लुकि—'टित आत्मनेपदानां टेरे' इत्यनेन टेरेत्वे 'आडुत्तमस्य पिच्च' इत्यनेन आडागमे तस्य चानेनैव पित्वे 'आटश्च' इत्यनेन वृद्धौ, पित्वेन 'सार्वधातुक' इत्यादिना गुणः प्राप्तो न भवति 'भूसुवोस्तिङि' इत्यनेन निषेधात् । ततश्च उवङादेशे 'सुवै' इति सिद्धम् ।

**यूयात्** ( ई० ३९, ४०, ४५ )—युधातोराशीर्लिङि तिपि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमेऽनुबन्धलोपे 'सुट् तिथोः' इत्यनेन सुडागमेऽनुबन्धलोपे सद्वयस्य स्कोरिति लोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेन दीर्घे 'यूयात्' इति सिद्धम् ।

ननु लिङ्स्थानिकादेशस्य तिपः पित्वात्तस्य च 'यदागम' परिभाषया यासुट्विशिष्टे सत्त्वात्तस्मिन् 'उतो वृद्धिर्लुकि' इत्यनेन वृद्धिर्दुर्वारेत्यत उच्यते—इह उतो वृद्धिर्न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात् । 'सार्वधातुकमपित्' इत्यस्यावृत्त्याऽस्य लाभः । न च पूर्ववाक्येन ङित्त्वमपि दुर्लभमिति वाच्यम् , विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यलम् ।

**ऊर्णुनाव** ( ई० ३९, ४३, ४६, ५४ )—ऊर्णु धातोर्लिटस्तिपि तिपो णलि अनुबन्धलोपे 'ऊर्णु अ' इति स्थिते 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि प्राप्ते 'ऊर्णोतेराम्नेति वाच्यम्' इति निषेधे 'अजादेर्द्वितीयस्य' इति 'र्णु' शब्दस्य द्वित्वे प्राप्ते 'नन्द्राः संयोगादयः' इति रेफस्य द्वित्वाऽभावे णत्वस्याऽसिद्धत्वात् 'नु' शब्दस्य द्वित्वे 'रषाभ्यां नो णः समानपदे' इति प्रथमनकारस्य णत्वे 'ऊर्णु नु अ' इति जाते गुणं बाधित्वा नित्यत्वाद् 'अचोऽञ्णिति' इति वृद्धौ 'एचोऽयवायावः' इत्यावि 'ऊर्णुनाव' इति सिद्धम् ।

**उर्णुनविथ** ( ई० ४४ )—अकारेत्संज्ञक-आच्छादनार्थक-'उर्णु'-धातोर्लिटि तत्स्थाने सिपि तस्य परस्मैपदानामित्यादिना थलादेशेऽनुबन्धलोपे आर्धधातुकसं-

ज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन इटि अजादेर्द्वितीयस्य-'र्णु' इत्यस्य द्वित्वे प्राप्ते 'नन्द्राः संयोगादयः' इत्यनेन रेफस्य द्वित्वनिषेधे णत्वस्याऽसिद्धत्वात् 'नु'-शब्दस्य द्वित्वेऽभ्याससंज्ञायां णत्वे 'विभाषोर्णोः' इत्यनेन विकल्पेन इटो ङित्वविधानात्तदभावे सति गुणे ततोऽवादेशे 'उर्णुनविथ' इति सिद्धम्। इडादिप्रत्ययस्य ङित्त्वे तु-गुणाभावे उवङि 'उर्णुनुविथ' इति रूपम्। नन्वत्र णत्वस्यासिद्धत्वान्नुशब्दस्य कथं द्वित्वम्? 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषयाऽसिद्धत्वनिषेधादिति चेत्? मैवम्, उभौ साभ्यासस्येत्यारम्भसामर्थ्येन तस्या अनित्यत्वज्ञापनात्।

**और्णोः** (ई० ३६)—आच्छादनार्थकस्य ककारेत्संज्ञक ऊर्णधातोर्लङि सिपि अनुबन्धलोपे मध्ये शपि अदादित्वात्तस्य लुकि अडागमं प्रबाध्य 'आडजादीनाम्' इत्यनेनाडागमे 'आटश्च' इत्यनेन वृद्धौ 'ऊर्णोतेर्विभाषा' इत्यनेन प्राप्तवैकल्पिकवृद्धिमपवाद्य 'गुणोऽपृक्ते' इत्यनेन गुणे सस्य रुत्वे विसर्गे च कृते 'और्णोः' इति सिद्धम्।

**ऊर्णविषीष्ट**—ऊर्णु धातोराशीर्लिङस्तप्रत्यये 'लिङः सीयुट्' इति सीयुटि उटावितौ 'ऊर्णु सीय् त' इति स्थिते 'लोपो व्योर्वलि' इति यलोपे 'आर्धधातुकस्येड्वलादेः' इति इटि 'विभाषोर्णोः' इति इटो ङित्वाऽभावपक्षे गुणे अवादेशे 'सुट्तिथोः' इत्यनेन तस्य सुटि उटि गते षत्वे ष्टुत्वे 'ऊर्णविषीष्ट' इति। इटो ङित्वाद् गुणाऽभावपक्षे उवङि 'ऊर्णुविषीष्ट' इति च सिद्धं भवति।

**और्णावीत्** (ई० ४१, ४७)—ऊर्णु धातोर्लुङस्तिपि अनुबन्धलोपे 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धौ मध्ये च्लौ च्लेः सिचि इचि गते 'इतश्च' इति तिप इकारलोपे 'आर्धधातुकस्येड्वलादेः' इति सिचः सस्य इटि 'अस्ति सिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे 'विभाषोर्णोः' इति इटो ङित्वाद् गुणाऽभावे उवङि अनुबन्धलोपे सवर्णदीर्घे 'और्णुवीत्' इति। ङित्वाऽभावपक्षे गुणं बाधित्वा 'ऊर्णोतेर्विभाषा' इति विभाषया वृद्धौ आवादेशे 'और्णावीत्' इति। वृद्ध्यभावपक्षे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'और्णवीत्' इति च सिद्धं भवति।

**और्णुविष्ट**—ऊर्णु धातोर्लुङि आत्मनेपदे तप्रत्यये आटि 'आटश्च' इति वृद्धौ च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'विभाषोर्णोः' इति इटो ङित्वाद् गुणाऽभावे उवङि अनुबन्धलोपे सिचः सस्य षत्वे ष्टुत्वे 'और्णुविष्ट' इति। ङित्वाऽभावे गुणे अवादेशे 'और्णविष्ट' इति च भवति।

**ऊर्णुञ्धातोर्लुङि रूपाणि ( ई० ३४ )—**

| परस्मैपदे | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| और्णुवीत् | और्णुविष्टाम् | और्णुविषुः | और्णुविष्ट | और्णुविषाताम् | और्णुविषत |
| और्णावीत् | और्णाविष्टाम् | और्णाविषुः | | | |
| और्णवीत् | और्णविष्टाम् | और्णविषुः | और्णविष्ट | और्णविषाताम् | और्णविषत |
| और्णुवीः | और्णुविष्टम् | और्णुविष्ट | और्णुविष्ठाः | और्णुविषाथाम् | और्णुविढ्वम् / और्णुविध्वम् |
| और्णावीः | और्णाविष्टम् | और्णाविष्ट | | | |
| और्णवीः | और्णविष्टम् | और्णविष्ट | और्णविष्ठाः | और्णविषाथाम् | और्णविढ्वम् / और्णविध्वम् |
| और्णुविषम् | और्णुविष्व | और्णुविष्म | और्णुविषि | और्णुविष्वहि | और्णुविष्महि |
| और्णाविषम् | और्णाविष्व | और्णाविष्म | | | |
| और्णविषम् | और्णविष्व | और्णविष्म | और्णविषि | और्णविष्वहि | और्णविष्महि |

**अस्तावीत्** ( ई० ४५ )—स्तुत्यर्थक-ञकारेत्संज्ञक-'ष्टु'-धातोः 'धात्वादेः षः सः' इत्यनेन सत्वे टस्याऽपि निवृत्तौ ततो लुङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशेऽनुबन्धलोपेऽनिट्कत्वादिडभावे प्राप्ते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इत्यनेन सिचः इडागमे अपृक्तहलश्चेडागमे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'सिचि वृद्धिः परस्मैपदेषु' इत्यनेन वृद्धौ आवादेशे 'अस्तावीत्' इति सिद्धम् । आत्मनेपदे—अस्तोष्टेति रूपम् ।

**अभ्यष्टौत्** ( ई० ३९ )—स्तुत्यर्थक-ञकारेत्संज्ञक-अभिपूर्वककृतसत्व-'स्तु'-धातोर्लङि तत्स्थाने तिपि अनुबन्धलोपे अडागमे मध्ये शपि तस्यादादित्वाल्लुकि यणि 'उतो वृद्धिर्लुकि हलि' इत्यनेन वृद्धौ 'प्राक्सितादड्व्यवायेऽपि' इत्यनेन षत्वे ततः ष्टुत्वे सति 'अभ्यष्टौत्' इति सिद्धम् ।

**आत्थ** ( ई० ४४, ४६, ४७ )—ञकारेत्संज्ञक-व्यक्तवाच्यर्थक-'ब्रू'—धातोर्लटि तत्स्थाने सिपि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्यनेन विकल्पेन ब्रुवः आहादेशे सिपस्थलादेशे च कृते 'आहस्थः' इत्यनेन हस्य थकारे तस्य चर्त्वे 'आत्थ' इति सिद्धम् । नच ब्रुवः परस्य हलादेः पित इड् भवतीत्यर्थकेन 'ब्रुव इट्' इत्यनेन थलि स्थानिवद्भावेन पित्वादीट् कथन्नेति वाच्यम् , झलि परे 'आहस्थः' इत्यनेन थत्वविधानेन स्थानिवद्भावाऽभावात् ।

**उवचिथ**—ब्रूधातोर्लिटः सिपि सिपस्थलादेशे थलः आर्धधातुकत्वात् 'ब्रुवो वचिः' इति ब्रुवो वचादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासवकारस्य लोपे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे थलः आर्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे भारद्वाजनियमाद् विभाषया इटि अनुबन्धलोपे 'उवचिथ' इति। इडभावपक्षे 'चोः कुः' इति कुत्वे 'उवक्थ' इति भवति।

**अवोचत्, अवोचत** ( ई० ४४ )—ब्रुवोर्लुङि तिपि अडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङि अनुबन्धलोपे 'ब्रुवो वचिः' इति वचादेशे 'अ वच् अ ति' इति स्थिते 'इतश्च' इति तिप इकारलोपे 'वच उम्' इति उमि अनुबन्धलोपे 'अव उ अ त्' इति दशायाम् 'आद्गुणः' इति गुणे 'अवोचत्' इति सिद्धम्। आत्मनेपदे 'अवोचत' इति बोध्यम्।

**ईयतुः** ( ई० ४४, ४७ )—णकारेत्संज्ञक 'इण्' धातोर्लिटि तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'इ इ अतुस्' इति स्थिते 'इणो यण्' इति यणि 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घे सकारस्य रुत्वे विसर्गे ईयतुः' इति सिद्धम्।

**आयन्**—इण्धातोर्लङि तत्स्थाने झौ झस्यान्तादेशे 'इणो यण्' इत्यनेन इकारस्य यणि तस्याभीयत्वेन असिद्धत्वादाटि शपो लुकि 'इतश्च' इतीकारलोपे 'संयोगान्तस्य लोपः' इति तलोपे 'आयन्' इति सिद्धम्।

**निरियात्**—निरुपसर्गपूर्वकाद् इण्धातोराशीर्लिङि तत्स्थाने तिपि 'इतश्चे'ति तिप इकारलोपे यासुटि तस्यार्धधातुकत्वे कित्वे सलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे 'एर्लिङि' इति ह्रस्वे 'निरियात्' इति।

**अभीयात्** ( ई० ४१,४५, ५२ )—अभीत्युपसर्गपूर्वकाद् इण्धातोर्लुङस्तिपि इकारलोपे यासुटि तस्यार्धधातुकत्वे कित्वे सलोपे सवर्णदीर्घे 'अभीयात्' इति। अत्र 'अन्तादिवच्च' इत्यनेन पूर्वान्तवद्भावेन 'एतेर्लिङि' इति ह्रस्वः कुतो नेति चेन्न, 'उभयत आश्रयणे नान्तादिवत्' इति निषेधात्। अयम्भावः—एकादेशस्य ईकारस्य पूर्वान्तत्वे तु उपसर्गानुप्रवेशात् इण्धातुत्वं न सम्भवति। परादित्वेन इण्धातुत्वाश्रयणे तु नोपसर्गात् परत्वम्, उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्वेन 'अभ्' इत्यस्य उपसर्गत्वाभावात्।

**'अभीयात्' इत्यत्र 'एतेर्लिङि' इति ह्रस्वः कुतो नेति**—ननु पूर्वान्तवद्भावेनोपसर्गत्वं परादिवद्भावेन च धातुत्वं वर्तत एवेति 'एतेर्लिङि' इत्यनेनोपसर्गात्परस्येणोऽणो ह्रस्वविधानात् 'अभीयात्' इत्यत्रापि ह्रस्वो दुर्वार इति चेद् ? न, 'उभयत आश्रयणे नान्तादिवत्' इति वचनेन निषेधात् । यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये प्रेरितोऽविरोधार्थी न कस्यापि करोति कार्यन्तद्वत् पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य स्फुटत्वाद्विरुद्धातिदेशस्य युगपदसम्भव इति तात्पर्यम् । नैतद्विषये स्थानिवद्भावप्रवृत्तिः, आनुमानिकस्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाऽभावात् वर्णयोरेव श्रौतस्थान्यादेशभावविधानाच्चेति दिक् ।

**अगात्**—इण्धातोर्लुङि 'इणो गा लुङि' इति इणो गादेशे कृते लुङः स्थाने तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लोपे 'इतश्च' इति तिप इकारलोपे 'अगात्' इति जातम् ।

**अधिजगे** ( ई० ४१, ४४ )—ङकारेत्संज्ञक-अध्ययनार्थक-अधिपूर्वक-'इ' धातोर्लिटि तत्स्थाने तप्रत्यये तस्य एशादेशेऽनुबन्धलोपे 'गाङ् लिटि' इत्यनेन इङो गाङादेशे ततो 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'कुहोश्चुः' इत्यनेन चुत्वे 'आतो लोप इटि च' इत्यनेन आलोपे 'अधिजगे' इति सिद्धम् । नचात्र 'द्विर्वचनेऽचि' इत्यनेन गाङादेशनिषेधात् प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे उक्तरूपं न सिद्ध्यतीति वाच्यम्, लावस्थायां लविवक्षिते वा गाङादेशप्रवृत्तौ द्वित्वनिमित्ताऽचोऽभावादुक्तसूत्रप्रवृत्तेरभावात् ।

**अध्ययै** ( ई० ३६, ४६ )—अध्युपसर्गकादृङकारेत्संज्ञक 'इ' धातोर्लोटि मध्यमपुरुषैकवचने इटि सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'एत ऐ' इति एकारस्य ऐकारे 'आडुत्तमस्य पिच्च' इत्याटि 'आटश्च' इति वृद्धौ 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे यणि च कृते 'अध्ययै' इति ।

**अध्ययै इति यथाशास्त्रं साधय**—ननु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्यभियुक्तोक्त्या अन्तरङ्गत्वाद् गुणादेः प्रागेव सवर्णदीर्घे यणि 'अध्ययै' इति न स्यादिति चेद्, उच्यते—'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण'

स्यात्। ततश्चार्धधातुके ऽप्यार्धधातुके प्रयोगः इति विज्ञाप्यते। ज्ञापकस्य सामान्यापेक्षत्वादिति दिक्।

**विदाञ्चकार**—विद्धातोर्लिटि 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामि 'विद् आम् लिट्' इति स्थिते आमः आर्धधातुकत्वेऽपि विदेरदन्तत्वप्रतिज्ञानात् लघूपधगुणाऽभावे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'विदाम् कृ लिट्' इति स्थिते लिटः स्थाने तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'विदाम् क कृ अ' इति जाते 'कुहोश्चु' इति अभ्यासककारस्य चुत्वेन चकारे 'विदाम् च कृ अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे आमो मकारस्य अनुस्वारे परसवर्णे च कृते 'विदाञ्चकार' इति सिद्धम्। आमोऽभावपक्षे 'विवेद' इति।

**विवेद**—विद्धातोर्लिटि आमोऽभावपक्षे तिपि णलि 'लिटि धातोरि'ति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'लिट् च' इति णलोऽकारस्य आर्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'विवेद' इति जातम्।

**विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** (ई०४०)-वेत्तेर्लोटयाम्, गुणाभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। अत्र इति शब्दः प्रकारे वर्तते तेन कुर्वन्त्विन्यनेन प्रथमपुरुषो बहुवचनञ्च न विवक्षितम्। एवञ्च लोडन्तसामान्यस्यानुप्रयोगोऽनेन विधीयते। तथा च विदाङ्करोतु, विदाङ्कुरुतादित्यादि लोटः समस्तरूपाणि उदाहरणानि। वेत्तेर्निपातनादेतद्भिन्नविद्यतिप्रभृतीनां लोटन्तकरोत्यनुप्रयोगो न भवतीति प्रत्युदाहरणानि।

**न विश्वसेदविश्वस्तमिति** (ई० ३६)—ननु प्राणनार्थक श्वस् धातोर्विधिलिङि श्वस्यादिति रूपं भवति, आदादिकत्वेन शपो लुक्त्वात् अदन्तत्वाभावेन 'अतो येयः' इत्यस्याप्रवृत्तेः। एवञ्च 'न विश्वसेदविश्वस्तम्' इत्यत्र विश्वसेदिति रूपं न सेत्स्यतीति चेत्? सत्यम्, गणकार्यस्यानित्यत्वादत्र शपो लुगभावेन रूपसिद्धेः। नचात्र किं मानमिति वाच्यम्, 'तनादिकृञ्भ्य उः' इत्यनेन तनादेः कृञश्च उप्रत्ययो भवति। तत्र तनादित्वादेव कृञोऽपि उप्रत्यये सिद्धे कृञ् ग्रहणेन गणकार्यस्यानित्यत्वावगमात्। यदि कृञ् ग्रहणं भाष्ये प्रत्याख्यातमिति विभाव्यते तदाऽऽर्षत्वादेवोक्तरूपस्य सिद्धिरिति विभावनीयम्।

**विदाङ्करोतु** ( ई० ३९, ४३, ४४, ४७ )—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति आमि गुणाऽभावे लोटो लुकि लोट्परकृञोऽनुप्रयोगे च निपातिते 'विदाम् कृ लोट्' इति स्थिते लोटः स्थाने तिपि अनुबन्धलोपे तिपः सार्वधातुकत्वात् शपि प्राप्ते तम्प्रबाध्य 'तनादि कृञ्भ्य उः' इत्युत्वे 'विदाम कृ उ ति' इति जाते 'आर्धधातुकं शेषः' इत्युकारस्यार्धधातुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे च विहिते 'विदाम् कर् उ ति' इति स्थिते तिपो निमित्तमादाय पुनः उकारस्य गुणे 'एरुः' इति तिप इकारस्य उत्वे मस्यानुस्वारे परसवर्णे 'विदाङ्करोतु' इति सिद्धम् । तातङि पक्षे 'विदाङ्कुरुतात्' इति । नन्वत्र तनादित्वादेव उप्रत्ययसिद्धे सूत्रे कृञ्ग्रहणं किमर्थमिति चेन्न, गणकार्यस्यानित्यत्वज्ञापनार्थं तस्यात्रस्यकत्वादत एव 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ।

**विदाङ्कुरुतात्**—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति आमि गुणाभावे लोटो लुकि लोट्परकृञोऽनुप्रयोगे च निपातिते 'विदाम् कृ लोट्' इति जाते लोटस्तिपि अनुबन्धलोपे 'एरुः' इत्युत्वे 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति तातङि अनुबन्धलोपे शपं बाधित्वा'तनादिकृञ्भ्य उः' इत्युप्रत्यये तस्यार्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे च कृते 'अत उत्सार्वधातुके' इति ककाराकारस्य उत्वे मस्यानुस्वारे परसवर्णे च कृते 'विदाङ्कुरुतात्' इति । 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति विकल्पपक्षे 'वेत्तु' इति ।

**वेत्तु**—विद्धातोर्लोटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'विद् ति' इति स्थिते गुणे दस्य चर्त्वे 'एरुः' इति तिप इकारस्य उत्वे 'वेत्तु' इति सिद्धम् ।

**विदाङ्कुर्वन्तु** (ई० ५२)—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इत्यामि गुणाभावे लोटो लुकि लोडन्तकृञोऽनुप्रयोगे च निपातिते 'विद् आम् कृ लोट्' इति स्थिते लोटः स्थाने झौ 'विदाम् कृ झि' इति जाते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये 'विदाम् कृ उ झि' इति दशायामुप्रत्ययस्यार्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे च कृते 'विदाम् कर् उ झि' इति जाते 'झोऽन्तः' इत्यनेन झस्याऽन्तादेशे 'अत उत्सार्वधातुके' इति ककाराकारस्य उत्वे मस्यानुस्वारे परसवर्णे 'एरुः' इत्युत्वे 'इको यणचि' इति यणि 'विदाङ्कुर्वन्तु' इति । 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति विकल्पपक्षे 'विदन्तु' इति च सिद्धं भवति ।

**विदाङ्कुरु** ( ई० ३९, ४५, ४६ )—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति आमि गुणाऽभावे लोटो लुकि लोऽन्तकृञोऽनुप्रयोगे च निपातिते 'विद् आम् कृ लोट्' इति स्थिते लोटः स्थाने सिपि सिपः सार्वधातुकत्वात् शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये उप्रत्यस्य आर्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे च कृते 'सेर्ह्यपिच्च' इति सिपः स्थाने हौ 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुकि उक्तं रूपं सिद्धम् ।

**स्तः**—अस्धातोर्लटः तसि सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'श्नसोरल्लोपः' इति अस्तेरकारलोपे सस्य रुत्वे विसर्गे 'स्तः' इति ।

**एधि, स्तात्** ( ई० ४१, ४७, ५३ )—अस्धातोर्लोटि सिपि 'सेर्ह्यपिच्च इति सिपः स्थाने हेरादेशे 'अस् हि' इति जाते 'घ्वसोरेद्धावभ्यासलोपश्च' इति सस्य एत्वे एत्वस्याऽसिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धौ 'श्नसोरल्लोपः' इत्यल्लोपे 'एधि' इति सिद्धम् । तातङ्पक्षे परेण तातङा बाधादेत्त्वाऽभावे 'स्तात्' इति च सिद्धं रूपं भवति ।

**आसीत्**—अस्धातोर्लङस्तिपि 'इतश्च' इति इलोपे 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धौ शपो लुकि 'अस्ति सिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तकारस्य ईडागमे 'आसीत्' इति ।

**आस्ताम्** ( ई० ३७ )—भुव्यर्थकात्-अस्-धातोर्लङि तत्स्थाने तस्प्रत्यये तस्य 'तस्थस्थमिपां तान्तन्तामः' इत्यनेन तामादेशे, अडमपवाद्याजादित्वात 'आडजादीनाम्' इत्यनेन आडागमात्प्राक् परत्वात् ङिति परे 'श्नोसोरल्लोपः' इत्यनेनाल्लोपे तस्य चाभीयत्वेनासिद्धत्वादाडागमे दीर्घे कृते 'आस्ताम्' इति सिद्धम् । नच कृते चाडागमेऽऽल्लोपः कथन्नेति वाच्यम्, अत इति तपरकरणान्नेति ।

**अभूत्** ( ई० ५६ )—अस्धातोर्लुङि तिपि इपाचितौ 'लुङ्लङ्–' इत्यडागमे 'अस्तेर्भूः' इत्यनेन अस्धातोर्भूभावे मध्ये च्लौ तस्य सिचि 'गातिस्थे'ति सिचो लुकि 'अभूत्' इति । अत्र 'अस्तिसिचोऽपृक्तेः' इत्यनेन ईटि तु न भूभावे सति अस्तेरश्रूयमाणत्वात् ।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्पर** ( ई० ४१ )—उपसर्गः प्रादुस् अनयोर्द्वन्द्वः इणकोरिरित्यधिकृतम्, तत्र 'इण' इत्युपसर्गेण सम्बध्यते न प्रादसि ततः परस्य

अस्तेः सस्य इणः परत्वाऽसम्भवात्, कोरित्यपि न सम्बध्यते असम्भवात्। अस्तिरिति षष्ठ्यर्थे प्रथमा। 'सहेः साडः सः' इत्यतः 'स' इति षष्ठ्यन्तमनुवर्तते 'अपदान्तस्य मूर्धन्यः' इत्यतः मूर्धन्यः इत्यधिकृतम्, अपदान्तस्य मूर्धन्य इत्यतः य्-अच्-अनयोर्द्वन्द्वः यचौ परौ यस्मादिति विग्रहः, यकारे अचि च परे इति लभ्यते, तथा च—उपसर्गेण प्रादुसश्च परस्याऽस्तेः सस्य षः स्याद्यकारेऽचि च परे इत्यर्थः सम्पद्यते। उदाहरणं यपरकत्वे यथा—निष्यात्, प्रादुष्यात्, अच्परकत्वे यथा—निषन्ति, प्रादुष्यन्ति।

**निष्यात्**—'नि' उपसर्गात् 'अस्' धातोर्लिङि तिपि अनुबन्धलोपे यासुटि अनुबन्धलोपे 'नि अस् यास् ति' इति स्थिते यासुटः ङित्वेन तस्मिन् परे 'श्नसोरल्लोपः' इत्यल्लोपे 'उपर्गप्रादुर्भ्यामस्तिर्यच्परः' इति धातोः सस्य षत्वे 'इतश्च' इति तिप इकारलोपे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'निष्यात्' इति सिद्धम्।

**मृड्ढि** (ई० ४४,४६)—मृजू शुद्धौ इत्यस्माद्धातोर्लोटि सिपि सेर्ह्यादेशे हेरपित्वेन ङित्वात् 'मृजेर्वृद्धिः' इति वृद्धिनिषेधे 'व्रश्चभ्रस्ज—' इति जस्य षत्वे हेर्ध्यादेशे षस्य जश्त्वेन डत्वे धस्य ष्टुत्वेन ढत्वे 'मृड्ढि' इति।

**रुदिहि** (ई० ४६)—अश्रुविमोचनार्थक-इरित्संज्ञक-'रुद्'-धातोर्लोटि तत्स्थाने सिपि तस्य ह्यादेशे मध्ये शपि तस्यादादित्वात्लुकि 'रुद् हि' इत्यवस्थायां 'हुझल्भ्योहेर्धिः' इत्यनेन हेर्धित्वं प्रबाध्य 'रुदादिभ्यः सार्वधातुके' इत्यनेन परत्वादिडागमे झल्परकत्वाऽभावेन धिभावाऽभावे 'रुदिहि' इति सिद्धम्।

**अरोदत्** (ई० ४१)—इरित्संज्ञक-अश्रुविमोचनार्थक-'रुद्' धातोर्लङि तत्स्थाने तिप्यनुबन्धलोपे अडागमे मध्ये शपि तस्य लुकि लघूपधगुणे 'अड्गार्ग्यगालवयोः' इत्यनेन अपृक्तस्य हलः अडागमे 'अरोदत्' इति सिद्धम्। अडभावे 'रुदश्च पञ्चभ्यः' इत्यनेन ईटि 'अरोदीत्' इति।

**रुद्यात्** (ई० ४६)—अश्रुविमोचनार्थक-रुद्-धातोराशीर्लिङि तत्स्थाने तिप्यनुबन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन प्राप्तं यासुटं परत्वाद्बाधित्वा 'अड्गार्ग्यगालवयोः' इत्यनेनाट्, 'रुदश्च पञ्चभ्यः' इत्यनेनेट् च प्राप्तौ, किन्तु प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुडागमे एव कृते सुडागमे सद्वयस्यापि 'स्को'रिति निवृत्तौ यासुटः 'किदाशिषि' इत्यनेन कित्वात्तस्मिन्परे लघूपधगुणनिषेधे 'रुद्यात्' इति सिद्धम्।

**अरुदत्** ( ई० ५३ )—अश्रुविमोचनार्थक-इरित्संज्ञक 'रुद्' धातोर्लुङि तिपि अडागमे अनुबन्धलोपे मध्ये च्लौ 'इरितो वा' इति च्लेरङि 'अरुदत्' इति। अङभावे 'अरोदीत्' इति।

**सुषुपतुः** ( ई० ४६, ५० )—'ञि ष्वप् शये' इत्यस्माद् धातोर्लिटि तसि अतुसि 'धात्वादेः षः सः' इति सत्वे 'वचिस्वपि—' इति सम्प्रसारणे पूर्वरूपे 'लिट्यभ्यासस्योभयेषाम्' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे सस्य षत्वे अतुसः सस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम्।

**सुषुषुपतुः** (ई० ३९,४३,४५,४७)—सूपसर्गक-'ष्वप्'-धातोः 'धात्वादेः षः सः, इत्यनेन सत्वे लिटि तत्स्थाने तसि तस्यातुसादेशे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे प्राप्ते 'असंयोगाल्लिट् कित्' इत्यनेनातुसः कित्वात् 'वचिस्वपि यजादीनां किति' इत्यनेन सम्प्रसारणे च प्राप्ते लक्ष्यानुसारात्परत्वाच्च 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षमनाश्रित्य 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'ति पक्षमेवावलम्ब्य सम्प्रसारणे पूर्वरूपे कृते 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इत्यनेन षत्वे 'षुप्' इत्यस्य पुनः प्रसङ्गविज्ञानाद्द्वित्वेऽभ्याससंज्ञायां हलादिशेषे सस्य रुत्वे विसर्गे च कृते 'सुषुषुपतुः' इति सिद्ध्यति। नच षत्वस्याऽसिद्धत्वात्कथमिह कृतषत्वस्य द्वित्वमिति वाच्यम्, 'पूर्वत्रासिद्धमद्विर्वचने' इति परिभाषयाऽसिद्धत्वाभावात्।

**सुसुष्वाप** (ई०४१,४६)—ञीकारपकारेत्संज्ञक-सूपसर्गक-कृतसत्व-'स्वप्'-धातोर्लिटि-तत्स्थाने तिपि तस्य 'परस्मैपदाना' मित्यादिना णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनाभ्यासस्य सम्प्रसारणे पूर्वरूपे 'सु सुप् स्वप् अ' इत्यवस्थायां 'सुविनिदुर्भ्यः सुपिसूतिसमाः' इति षत्वस्याऽसिद्धत्वान्नित्यत्वाच्च पूर्वं हलादिशेषे ततः सुपिरूपत्वाभावात्षत्वाऽभावे 'आदेशप्रत्यययोः' इत्यनेन स्वपः सस्य षत्वे उपधावृद्धौ सत्यां 'सुसुष्वाप' इति सिद्धम्।

**प्राणिति** ( ई० ४९ )—प्राणनार्थक-प्रोपसर्गक-'अन्'-धातोर्लटि तत्स्थाने तिपि अनुबन्धलोपे मध्ये शपि तस्य लुकि 'रुदादिभ्यः सार्वधातुके' इत्यनेन सार्वधातुकेऽपि वलादाविटि भिन्नपदस्थत्वेन समानपदाभावात् पूर्वेणाप्राप्तौ 'अनितेः' इत्यनेन णत्वे सवर्णदीर्घे 'प्राणिति' इति सिद्धम्।

**जक्षति**—जक्ष्धातोर्लटि झौ शपो लुकि 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झस्य अन्तादेशं प्रबाध्य अदादेशे 'जक्षति' इति सिद्धम् ।

**जाग्रोऽविचिण्णल्ङित्सु**—जाग्रः इति षष्ठी । 'अविचिण्णल्ङित्सु' इतिच्छेदः । वि चिण् णल् ङित् एषां द्वन्द्वे नञ्समासः । 'जाग्रतेर्गुणः स्याद् विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च' इति सूत्रार्थः । प्रत्युदाहरणं यथा, वि—जागृविः । चिण्—अजागारि । णल्—जजागार । ङित्—जागृतः । इति ।

**जजागरुः**—जागृधातोर्लिटि झौ 'परस्मैपदानाम्—' इति झेरुसादेशे 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामभावपक्षे 'लिटि धातोः—' इति द्वित्वे अभ्यासादिकार्ये 'जजागृ उस्' इति स्थिते कित्वाद् गुणनिषेधे प्राप्ते 'जाग्रोऽविचिण्णल्ङित्सु' इत्यनेन गुणे रपरत्वे सस्य रुत्वे विसर्गे 'जजागरुः' इति सिद्धम् ।

**अजागः** ( ई० ३८ )—जागृधातोर्लङि तिपि अडागमे अनुबन्धलोपे सार्वधातुसंज्ञायां शपि शपो लुकि 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे रपरत्वे हल्ङ्यादिना तलोपे रुत्वे विसर्गे 'अजागः' इति ।

**अजागरुः** ( ई० ४८ )—निद्राक्षयार्थक ऋकारेत्संज्ञक 'जागृ' धातोर्लङि तत्स्थाने झिप्रत्यये अडागमे 'जक्षित्यादयः षट्' इत्यनेनाभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इत्यनेन झस्यादादेशे प्राप्ते—'सिजभ्यस्तविदिभ्यश्च' इत्यनेन झेर्जुसादेशेऽनुबन्धलोपे शपो लुकि 'सार्वधातुकमपित्' इत्यनेन ङित्वात् 'जाग्रोऽविचिण्णल्ङित्सु' इति सूत्रेण अविचिण्णल्ङित्स्विति पर्युदासादाद्गुणेऽप्राप्ते 'जुसि च' इत्यनेन गुणे रपरत्वे सस्य रुत्वे विसर्गे च कृते 'अजागरुः' इति सिद्धम् ।

**अजागरीत्** (ई०३८,४१,४४,४६,४७,५६)—जागृधातोर्लुङि तिपि अडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे मध्ये च्लौ तस्य सिजादेशे इत्वावितौ 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि सति यणि प्राप्ते तम्प्रबाध्य 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते तञ्च बाधित्वा 'सिचि वृद्धिः—' इति वृद्धिः प्राप्ता तामपि प्रबाध्य 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे रपरत्वे च कृते 'अजागर् इ स् त्' इति स्थिते हलन्तलक्षणायाः वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेर्लघोः' इति वृद्धिः प्राप्ता ताञ्च बाधित्वा 'अतोल्रान्तस्य' इत्यनेन प्राप्तायामपि वृद्धौ 'ह्ययन्त—'

इति निषेधे 'अस्तिसिचोऽपृक्ते' इत्यनेन ईडागमे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अजागरीत्' इति ।

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥ ( ई० ३८, ४६ )

**अयम्भावः**—जागृ–धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमे 'अजागृ इ स् त्' इत्यवस्थायां यणि प्राप्ते तम्प्रबाध्य 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे प्राप्ते तञ्च बाधित्वा 'सिचि वृद्धिः परस्मैपदेषु' इत्यनेन वृद्धिः प्राप्ता तामपि बाधित्वा 'जाग्रोऽविचिण्णल्ङित्सु' इत्यनेन गुणे रपरत्वे च कृते प्राप्ताया अपि हलन्तलक्षणाया वृद्धेः 'नेटि' इत्यनेन निषेधे 'अतो हलादेर्लघोः' इत्यनेन वृद्धिः प्राप्ता ताञ्च बाधित्वा 'अतोल्रान्तस्य' इत्यनेन प्राप्तायामपि वृद्धौ 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इत्यनेन निषेधे 'अस्तिसिचोऽपृक्ते' इत्यनेन ईडागमे 'इट ईटि' इत्यनेन सलोपे सवर्णदीर्घे 'अजागरीत्' इति सिद्धम्भवति । तथाचोक्तम्–गुणो वृद्धिरिति ।

**दरिद्राञ्चकार** ( ई० ४६ )—दुर्गत्यर्थक–'दरिद्रा'धातोर्लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' इति सूत्रस्थ 'कास्यनेकाच आम्वक्तव्यः' इत्यनेनामि सवर्णदीर्घे 'आमः' इति लिटो लुकि 'कृञ्चाऽनुप्रयुज्यते लिटि' इत्यनेन लिटपरक–'कृ'–इत्यस्याऽनुप्रयोगे लिटः स्थाने तिपि 'परस्मैपदाना'मित्यादिना णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्यासादिकार्ये 'दरिद्राञ्चकार' इति सिद्धम् । केचित्तु—'आत औ णलः' इत्यत्र 'ओ' इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्, तथा च तदाऽऽमोऽभावे 'ददरिद्रौ' इति रूपमिति वदन्ति । केचित्तु णलि 'ददरिद्र' इत्याहुः—तत् कास्प्रत्ययादाममन्त्रे लिटि, 'वस्वेकाजाद्घसाम्' इति सूत्रस्थभाष्यकैयटविरोधान्निर्मूलमेव ।

**ददरिद्रौ** ( ई० ४५, ४७ )—दुर्गत्यर्थक 'दरिद्रा' धातोर्लिटि तत्स्थाने तिपि तस्य 'परस्मैपदाना'मित्यादिना णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'आत औ णलः' इत्यनेन णल औकारे वृद्धौ सत्यां 'ददरिद्रौ' इति सिद्धम् । न चात्र ओकार एव विधीयतां वृद्धौ सत्यामुक्तरूपस्य सिद्धिः स्यादेवेति वाच्यम्, तथा सति 'आतो लोप इटि च' इत्यनेनाल्लोपे सति औकारस्याश्रवणापत्तेः । नचात्रानेकाच्त्वेनाम् कुतो नेति वाच्यम्,

आमि सति णल एवाप्रसक्त्याऽस्माद्धातोरेव परस्यौकारश्रवणार्थौकारविधानस्य वैयर्थ्यापत्तेः। यच्च ददरिद्रेति रूपन्तद्वस्वेकाजाद्धसामिति सूत्रस्थभाष्यकैयटविरोधान्निर्मूलमेवेति।

**दरिद्राधातोर्लिटि प्रथमपुरुषैकवचने रूपाणि**—दरिद्राधातोर्लिटि दरिद्राञ्चकार, ददरिद्रौ, ददरिद्र इति रूपत्रयमुक्तं ग्रन्थकृता। तत्राद्यं द्वयं न्याय्यं तृतीयन्त्वन्याय्यम्। 'कास्प्रत्ययादाममन्त्रे लिटि' इति सूत्रभाष्ये दरिद्राधातोराम् उक्तत्वात् 'दरिद्राञ्चकार' इति न्याय्यम्। 'आत औ णलः' इत्यत्र प्रथमातिक्रमे कारणाभावात् ओकार एव विधातुमुचितः। वृद्धौ सत्यां तावतैव 'ययौ' इत्यादिसिद्धेः। तस्मादौकारविधानं दरिद्राधातोर्णलि 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इत्यालोपे 'ददरिद्रौ' इत्योकारश्रणणार्थं सम्पद्यते। ओकारविधाने तु आल्लोपे सति वृद्धेरसम्भवात् ददरिद्रो इत्योकार एव श्रूयते। अत एव लिटि आम्नेति विज्ञायते। आमि सति णल एवाप्रसक्तेः इति 'वस्वेकाजाद्धसाम्' इति सूत्रभाष्ये ध्वनितं, कैयटेन च स्पष्टीकृतम्। अतो द्वितीयं ददरिद्रौ इत्यपि न्याय्यम्। तृतीयन्तु सुतरामन्याय्यमिति दिक्।

**अचकाः** ( ई० ४६,४७ )—'चकासृ दीप्तौ' इत्यस्माद्धातोर्लङि तिपि अडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'हल्ङ्याादिना तलोपे 'सिपि धातोरुर्वा' इति रुत्वाभावपक्षे 'तिप्यनस्तेः' इति सस्य दत्वे 'वाऽवसाने' इति चर्त्वे 'अचकात्' इति। रुत्वपक्षे 'अचकाः' इति।

**शाधि** ( ई० ३६, ४१, ४५ )—शास्धातोर्लोटि सिपि सेर्ह्यादेशे शपो लुकि 'शास् हि' इति स्थिते 'शास इदङ् हलोः' इति सूत्रं प्रबाध्य 'शा हौ' इत्यनेन शासः शादेशे तस्य आभीयत्वेन 'असिद्धवदत्राभात्' इत्यनेन असिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्ध्यादेशे 'शाधि' इति जातम्।

**शाधि** ( ई० ३६, ४१, ४५ ) अनुशिष्टार्थक-उकारेत्संज्ञक शास् धातोर्लोटि तस्थाने सिपि अनुबन्धलोपे तस्य 'सेर्ह्यपिच्च' इत्यनेन ह्यादेशे, मध्ये शपि तस्य 'अदिप्रभृतिभ्यः शपः' इत्यनेन लुकि, शास् हि इति दशायाम् 'शा हौ' इत्यनेन 'शास इदङ् हलोः' इत्यनेन प्राप्तेत्वमपवाद्य शादेशे, तस्य आभीयत्वेन 'असिद्धवदत्राभात्' इत्यनेनासिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धिरित्यादेशे 'शाधि' इति सिद्धम्। ननु शासः शाभावाऽभावेऽपि हेर्धित्वे 'धि च' इत्यनेन सलोपे रूपं

सिद्धयत्येवेति व्यर्थं 'शा हौ' इति सूत्रमिति चेत्! मैवम्, तथा सति सलोपस्या सिद्धत्वात् 'शास इदि'तीत्वं प्रसज्येत तद्व्यावृत्त्यर्थं शाविधानस्यावश्यकत्वात्।

**दीध्ये** (ई० ३६,३९,४१)—ङकारेत्संज्ञकच्छान्दस 'दीधी' धातोर्लटि तत्स्थाने इटि अनुबन्धलोपे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे प्राप्ते परत्वात् 'यीवर्णयोर्दीधीवेव्योः' इत्यनेन ईकारस्य लोपे च प्राप्ते नित्यत्वाल्लोपं बाधित्वा टेरेत्वे ततः इवर्णपरत्वाभावात् लोपाभावे 'एरनेकाचोऽसंयोगपूर्वस्य' इत्यनेन यणादेशे 'दीध्ये' इति सिद्धम्।

**सधि** (ई० ३७,४५)—स्वप्नार्थक-सस्-धातोर्लोटि तत्स्थाने सिपि 'धात्वादेः षः सः' इति सत्वे शपो लुकि 'सेर्ह्यपिच्च' इत्यनेन सेर्ह्यादेशे 'हुझल्भ्यो हेर्धिः' इत्यनेन हेर्धिभावे 'धि च' इत्यनेन सकारलोपे 'सधि' इति सिद्धम्। नचात्र धीत्यस्य स्थानिवद्भावेन हित्वात् 'अतो हेः' इति हेर्लुक् स्यादिति वाच्यम्, पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वेन अतः परत्वाभावात्।

**सन्ति** (ई० ३९)—स्वप्नार्थकेकारेत्संज्ञकषोपदेशत्वात्कृतसत्व 'सस्त्' धातोर्लटि तिपि इपावितौ शपि शपो लुकि इदित्वाद् 'इदितो नुम् धातोः' इति नुमि अनुबन्धलोपे 'नश्च' इति नस्यानुस्वारे 'स्कोः-' इति सलोपे परसवर्णे 'झरो झरि सवर्णे' इति तलोपे 'सन्ति' इति। लोपाभावे द्वितकारकं रूपमित्यवगन्तव्यम्।

**उड्ढि** (ई० ४०)—कान्त्यर्थक 'वश्' धातोर्लोटि तत्स्थाने सिपि शपो लुकि 'सेर्ह्यपिच्च' इत्यनेन सेर्ह्यादेशे 'हुझल्भ्यो हेर्धिः' इत्यनेन धिभावे अपित्वे 'सार्वधातुकमपित्' इत्यनेन ङित्वात् 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन सम्प्रसारणे पूर्वरूपे शस्य व्रश्चेति शान्तत्वात्षत्वे धस्य ष्टुत्वेन ढकारे षस्य जश्त्वेन डकारे 'उड्ढि' इति।

**औष्टाम्** (ई० ३८)—कान्त्यर्थक-वश्-धातोर्लङि तत्स्थाने तसि तस्य तामादेशे शपो लुकि 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन सम्प्रसारणे 'सम्प्रसारणाच्च' इत्यनेन पूर्वरूपे 'आडजादीनाम्', इत्याडागमे 'आटश्च' इति वृद्धौ 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन शान्तत्वात्षत्वे ष्टुत्वे 'औष्टाम्' इति सिद्धम्।

इत्यदादिप्रकरणम्।

# अथ जुहोत्यादिप्रकरणम्

**जुहोति** ( ई० ३७ )—हु-धातोर्लटि तत्स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि शकारपकारयोरित्संज्ञायां लोपे च 'जुहोत्यादिभ्यः श्लुः' इत्यनेन शपः श्लावादेशे 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'कुहोश्चुः' इति चुत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'जुहोति' इति सिद्धम् ।

**जुहवाञ्चकार-जुहाव** ( ई० ४३, )—हुधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इति लिटः पाक्षिके आमि श्लुवद्भावे च विहिते द्वित्वे अभ्यासत्वे चुत्वेन हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे गुणेऽवादेशे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'जुहवाम् कृ लिट्' इति स्थिते लिटस्तिपो णलि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे 'हलादिः शेषः' इत्यनेन अभ्याससम्बन्धिरेफस्य लोपे 'कुहोश्चुः' इति अभ्यासककारस्य चुत्वे 'जुहवाम् च कृ अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे च विहिते मस्यानुस्वारे परसवर्णे 'जुहवाञ्चकार' इति । आमोऽभावपक्षे लिटस्तिपि णलि द्वित्वादिकार्ये 'अचोऽञ्णिति' इति वृद्धौ आवादेशे 'जुहाव' इति भवति ।

**जुहुधि** (ई० ४३)—दानाऽदनार्थक-हु-धातोर्लोटि तत्स्थाने सिपि अनुबन्धलोपे सेर्ह्यादेशे शपमपवाद्य 'जुहोत्यादिभ्यः श्लुः' इत्यनेन श्लुप्रत्यये श्लाविति द्वित्वेऽभ्याससंज्ञायां 'कुहोश्चुः' इत्यनेन चुत्वे 'हुझल्भ्यो हेर्धिः' इत्यनेन हेर्धिभावे कृते 'जुहुधि' इति सिद्धम् ।

**अजुहवुः**—हुधातोर्लङि झौ झेर्जुसि अडागमे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्यासत्वे 'कुहोश्चुः' इति हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जुसि च' इति गुणे अवादेशे 'अजुहवुः' इति ।

**बिभीतः** ( ई० ४१ )—भयार्थक-'भी'-धातोर्लटि तत्स्थाने तसि 'मध्ये शपि तस्य श्लुकृते 'श्लौ' इत्यनेन द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'अभ्यासे चर्च' इत्यनेन चर्त्वे 'भियोऽन्यतरस्याम्' इत्यस्य वैकल्पिकत्वेनाभावपक्षे सस्य रुत्वे विसर्गे 'बिभीतः' इति । इकारपक्षे तु–बिभितः इति रूपम् ।

**बिभयाञ्चकार-बिभाय**—भीधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इत्यामि आमः श्लुवद्भावात् 'श्लौ' इति द्वित्वे अभ्यासत्वे अभ्यासस्याचो ह्रस्वे भस्य

चत्वे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'लिटि धातोः—' इति द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'बिभयाम् च कृ अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे मस्यानुस्वारे परसवर्णे 'बिभयाञ्चकार' इति। आमोऽभावपक्षे लिटस्तिपि णलि द्वित्वादिकार्ये वृद्धौ आयादेशे 'बिभाय' इति भवति।

**बिभितात्–बिभीतात्–बिभेतु**—भियो लोटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुत्वे 'श्लौ' इति द्वित्वे 'ह्रस्वः' इति ह्रस्वे 'अभ्यासे चर्च' इति बत्वे 'बिभी ति' इति दशायाम् 'एरुः' इति तिप इकारस्य उत्वे 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति तातङि अनुबन्धलोपे 'भियोऽन्यतरस्याम्' इत्यनेन ईकारस्य इकारे 'बिभितात्' इति सिद्धम्। 'भियोऽन्यतरस्याम्' इति विकल्पपक्षे 'बिभीतात्' इति। तातङभावपक्षे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'बिभेतु' इति च रूपं भवति।

**जिह्रयाञ्चकार–जिह्राय** ( ई० ३६ )—ह्रीधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इत्यामि श्लुवद्भावे च विहिते 'श्लौ' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'ह्रस्वः' इति ईकारस्य ह्रस्वे 'हलादिः शेषः' इति अभ्याससम्बन्धिरेफस्य लोपे 'कुहोश्चुः' इति अभ्यासहस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जिह्री आम् लिट्' इति स्थिते 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'जिह्री आम् कृ लिट्' इति भूते 'लिटस्तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे अभ्यासत्वे उरदत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'कुहोश्चु' इति कस्य चत्वे 'जिह्री आम् च कृ अ' इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'जिह्रयाम् च कृ अ' इति भूते 'अचोञ्णिति' इति वृद्धौ रपरत्वे च कृते मस्यानुस्वारे परसवर्णे 'जिह्रयाञ्चकार' इति आमभावपक्षे लिटस्तिपि तिपो णलि द्वित्वादिकार्ये 'अचोऽञ्णिति' इति वृद्धौ आयादेशे 'जिह्राय' इति भवति।

**जिह्रीयात्**—ह्रीधातोर्विधिलिङि लिङस्तिपि शपि शपः श्लौ 'श्लौ' इति द्वित्वेऽभ्यासत्वे ह्रस्वत्वे 'हलादिः शेषः' इति रलोपे 'कुहोश्चु' इति अभ्यासहस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे यासुटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'जिह्रीयात्' इति सिद्धम्।

**पिपर्ति** ( ई० ३७, ४६ )—पॄ-धातोर्लटि तिपि अनुबन्धलोपे शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायाम्-'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येकारान्तादेशे रपरत्वे हलादिशेषे च कृते उत्तरखण्ड-ऋकारस्य 'उदोष्ठ्यपूर्वस्य' इत्यनेन उत्वे प्राप्ते तं प्रबाध्य परत्वाद् गुणे रपरत्वे 'पिपर्ति' इति सिद्धम्।

**पिपूर्तः** ( ई० ३७ )—पॄधातोर्लटस्तसि सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायाम् 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इकारान्तादेशे रपरत्वे हलादिशेषे 'पि पॄ तस्' इति स्थिते 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरत्वे 'हलि च' इति धातोरुपधायाः दीर्घे सस्य रुत्वे विसर्गे 'पिपूर्तः' इति सिद्धम्।

**पिपुरति** ( ई० ४२ )—पॄधातोर्लटि झौ शपि शपः श्लौ द्वित्वे अभ्यासत्वे 'ह्रस्वः' इति ह्रस्वे 'उरत्' इत्यत्वे हलादिशेषे 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य इत्वे 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झेरति 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'पिपुरति' इति सिद्धम्।

**पप्रतुः** ( ई० ३८ )—पॄधातोर्लिटस्तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे ह्रस्वे अत्वे रपरत्वे अभ्यासलोपे 'पपॄ अतुस्' इति भूते 'शॄदॄप्रां ह्रस्वो वा' इत्यनेन वैकल्पिके ह्रस्वे 'इको यणचि' इति यणि सस्य रुत्वे विसर्गे 'पप्रतुः' इति। ह्रस्वाऽभावपक्षे 'ऋच्छत्यॄताम्' इति गुणे रपरे च विहिते 'पपरतुः' इति रूपं भवति।

**अपिपः**—पॄधातोर्लङस्तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे शपि शपः श्लौ द्वित्वे अभ्यासकार्ये 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वे गुणे रपरत्वे हल्ङ्यादिना तलोपे रेफस्य विसर्गे 'अपिपः' इति।

**अपिपरुः**—पॄधातोर्लङि झौ अडागमे शपि शपः श्लुत्वे द्वित्वे अभ्यासादिकार्ये 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य इत्वे 'उभयेऽभ्यस्तम्' इत्यभ्यस्तसंज्ञायां 'सिजभ्यस्त-विदिभ्यश्च' इति झेर्जुसि 'जुसि च' इति गुणे रपरत्वे सस्य रुत्वे विसर्गे 'अपि-परुः' इति।

**अपारिष्टाम्**—पॄधातोर्लुङि तसि तसस्तामि अडागमे च्लौ च्लेः सिचि इचि गते 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरत्वे सिचः सस्य इटि 'वॄतो वा' इति इटो दीर्घे प्राप्ते 'सिचि च परस्मैपदेषु' इति निषेधे सस्य षत्वे ष्टुत्वे 'अपारि-ष्टाम्' इति।

**'भृञामित्'** ( ई० ३६ )—अत्र बहुत्वमाद्यर्थकम् , तेन भृञ् माङ् ओहाङ् इति त्रयाणां संग्रहे एषां त्रयाणामभ्यासस्य इत्स्यादित्यर्थः सम्पद्यते। एवञ्च मिमीते, जिहीते, इत्यादावप्यभ्यासस्येत्वसिद्धिरिति फलं ज्ञेयम्।

**अबिभरुः** ( ई० ३६ )—डु-इत्संज्ञकञ्कारेत्संज्ञक-धारणपोषणार्थक—भृधातोर्लुङि तत्स्थानेझिप्रत्यये, अडागमे अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि, तस्य 'जुहोत्यादिभ्यः श्लुः' इत्यनेन श्लौ, तस्मिन्परे 'श्लौ' इत्यनेन द्वित्वे, अभ्याससंज्ञायाम् , 'उरदि'त्यनेन अत्वे रपरत्वे हलादिशेषे 'अभ्यासे चर्च' इत्यनेन जश्त्वे 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायां 'सिजभ्यस्तविदिभ्यश्च' इत्यनेन अभ्यस्तत्वाज्झेर्जुसि, अनुबन्धलोपे 'जुसि च' इत्यनेन गुणे 'अबिभरुः' इति।

**जहाहि–जहिहि–जहीहि** ( ई० ४१ )—'ओहाकृत्यागे' अस्माद्धातोर्लोटः स्थाने सिपि 'सेर्ह्यपिच्च' इति तस्य 'हि' इत्यादेशे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासस्याचो ह्रस्वे 'कुहोश्चुः' इति अभ्यासहकारस्य कुत्वेन झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'आ च हौ' इति आत्वपक्षे 'जहाहि' इति, इत्वपक्षे 'जहिहि' इति, ईत्वपक्षे तु 'जहीहि' इति रूपत्रयं सिद्धं भवति।

**जह्यात्** ( ई० ४४ )—हाधातोर्लिङि तिपि शपि शपः श्लौ द्वित्वे अभ्यासत्वे ह्रस्वे हस्य झत्वे झस्य जश्त्वे च कृते यासुटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'इतश्च' इति तिप इकारलोपे 'लोपो यि' इत्याकारलोपे 'जह्यात्' इति जातम्।

**हेयात्**— हाधातोराशीर्लिङि तिपि यासुटि उटावितौ तिप इकारलोपे 'स्कोः–' इति सलोपे 'एर्लिङि' इति हस्य एत्वे 'हेयात्' इति।

**अदित** ( ई० ३८, ४१ )—दाधातोरात्मनेपदे लुङ्स्तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि इचि गते 'दाधाघ्वदाप्' इति घुत्वात् 'स्थाघ्वोरिच' इति इत्वे 'ह्रस्वादङ्गात्' इति सिचो लुकि 'उश्च' इति कित्वात् गुणाभावे 'अदित' इति।

**धत्तः** ( ई० ४५ )—धाधातोर्लटि तसि सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि 'जुहोत्यादिभ्यः श्लुः' इति श्लौ 'श्लौ' इति धातोर्द्वित्वे पूर्वस्य अभ्याससंज्ञायां 'ह्रस्वः' इति ह्रस्वे 'अभ्यासे चर्च' इति धकारस्य दकारे 'उभे अभ्यस्तम्' इति

अभ्यस्तसंज्ञायां 'श्नाभ्यस्तयोरातः' इति आकारस्य लोपे 'दधस्तथोश्च' इति भष्भावे 'खरि च' इति चर्त्वे सकारस्य रुत्वे विसर्गे च रूपम् । न चात्र 'अचः परस्मिन् पूर्वविधौ' इति सूत्रेण आकारस्य स्थानिवद्भावेन झषन्तत्वाभावाद् भष्भावो न स्यादिति वाच्यम् । अत्र भषभावे कर्तव्ये आलोपो न स्थानिवत्, सूत्रारम्भसामर्थ्यात् । वस्तुतस्तु 'पूर्वत्रासिद्धे न स्थानिवत्' इति परिभाषया त्रिपादिस्थे भष्भावे कर्तव्ये सपादसप्ताध्यायीस्थाकारलोपस्य स्थानिवत्त्वनिषेधात् । परिभाषारूपयुक्त्या कार्यनिर्वाहे सति वचनारम्भाश्रयणन्निष्फलमिति ।

**धेहि**—धाधातोर्लोटः सिपि 'सेर्ह्यपिच्च' इति सेर्हित्वे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासाकारस्य ह्रस्वे 'दाधाघ्वदाप्' इति घुत्वे 'घ्वसोरेद्धावभ्यासलोपश्च' इति एत्वे अभ्यासलोपे च कृते 'धेहि' इति सिद्धम् ।

**बिभ्रति**—भृञ्धातोर्लटः झौ सार्वधातुकसंज्ञायां शपि शपः श्लौ द्वित्वे अभ्यासत्वे 'भृ भृ झि' इति स्थिते 'भृञामित्' इति अभ्यासस्य इत्वे रपरत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे 'बि भृ झि' इति स्थिते 'उभेऽभ्यस्तम्' इति अभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झस्य अति 'इको यणचि' इति यणि 'बिभ्रति' इति सिद्धम् ।

**बिभराञ्चक्रे**—भृधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इत्यामि श्लुवद्भावे द्वित्वे अभ्यासादिकार्ये 'भृञामित्' इत्यभ्यासस्य इत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकक्रञोऽनुप्रयोगे आत्मनेपदपक्षे लिटः तादेशे तस्य एशादेशे द्वित्वादिकार्ये मस्यानुस्वारे परसवर्णे ऋकारस्य यणि उक्तं रूपं सिद्धम् । आमोऽभावपक्षे 'बभ्रे' इति च सिद्धं भवति ।

**अबिभरुः** ( ई० ३६ )—भृधातोर्लङि तस्थाने झौ 'लुङ्लङ्' इत्यटि सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्यासत्वे 'भृञामित्' इति अभ्यासस्य इत्वे रपरत्वे हलादिशेषे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बत्वे 'अबि भृ झि' इति जाते 'जुसि च' इति ऋकारस्य गुणे रपरत्वे च विहिते 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशे सस्य रुत्वे विसर्गे 'अबिभरुः' इति जातम् ।

**भ्रियात्**—भृधातोराशीर्लिङि तिपि इपावित्तौ यासुटि उटि गते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भृ या त्' इति स्थिते 'रिङ्शयग्लिङ्क्षु' इति ऋकारस्य

रिङादेशे अनुबन्धलोपे 'रिङ्' विधानसामर्थ्यात् 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घाऽभावे 'भ्रियात्' इति सिद्धम् ।

**अभृत**—भृधातोर्लुङि आत्मनेपदे लुङस्तादेशे अडागमे च्लौ च्लेः सिचि 'ह्रस्वादङ्गात्' इति सिचो लुकि 'उश्च' इति कित्वात् गुणनिषेधे 'अभृत' इति ।

**नेनेक्ति** ( ई० ३७, ३९ ) इरित्संज्ञक-णकारोपदेशक-निज्-धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि शपः श्लौ अनुबन्धलोपे 'श्लौ' इति द्वित्वेऽभ्यास-संज्ञायां हलादिशेषे लघूपधगुणे पूर्वखण्डस्य 'निजां त्रयाणां गुणः श्लौ' इत्यनेन गुणे 'चोः कुः' इत्यनेन कुत्वे चर्त्वे च कृते 'नेनेक्ति' इति रूपं सिद्धम् ।

**नेनिग्धि**—'णिजिर् शौचपोषणयोः' अस्माद्धातोर्लोटि 'इर इत्संज्ञा वाच्या' इति इर इत्संज्ञायां लोपे च विहिते 'णो नः' इति धातोर्णस्य नत्वे 'निज् लोट्' इति स्थिते लोटः स्थाने सिपि सार्वधातुकसंज्ञायां शपि शपः श्लौ द्वित्वे अभ्यास-संज्ञायाम् 'शेषे लोपः' इत्यभ्यासजकारस्य लोपे 'सेर्ह्यपिच्च' इति सेर्हित्वे 'निजां त्रयाणां गुणः श्लौ' इति अभ्यासगुणे 'हुझल्भ्यो हेर्धिः' इति हेर्ध्यादेशे 'चोः कुः' इति जस्य गत्वे 'नेनिग्धि' इति जातम् ।

**नेनिजानि**—( ई० ४५ )—'णिजिर् शौचपोषणयोः' इत्यस्माद्धातोर्लोटि 'इर इत्संज्ञा वाच्या' इति वार्तिकेन इर इत्संज्ञायां लोपे च कृते 'णो नः' इति धातोर्णस्य नत्वे 'निज् लोट्' इति स्थिते लोटः स्थाने मिपि 'मेर्निः' इति मेर्न्यादेशे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्याससम्बन्धिजकारस्य लोपे 'नि निज् नि' इति स्थिते 'आडुत्तमस्य पिच्च' इत्याटि अनुबन्धलोपे 'णिजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणे 'नेनिज् आनि' इति स्थिते आटः पित्वात् 'पुगन्तलघूपधस्य च' इति गुणे प्राप्ते 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधे 'नेनिजानि' इति सिद्धम् ।

**ऐयरुः**—ऋधातोर्लङि तत्स्थाने झौ झेर्जुसि शपः श्लौ द्वित्वे अभ्याससंज्ञायाम् उरदत्त्वं बाधित्वा 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य इत्वे रपरत्वे हलादिशेषे 'अभ्यास-स्यासवर्णे' इतीयङि उत्तरखण्डस्य गुणे रपरत्वे सस्य रुत्वे विसर्गे 'इयरुः' इति स्थिते आटि वृद्धौ 'ऐयरुः' इति सिद्धम् ।

**अनेनिजम्** ( ई० ४५ )—निज्धातोर्लङि णस्य नत्वे मिपि अमि शपि शपः श्लौ द्वित्वे अभ्यासादिकार्ये अडागमे 'णिजां त्रयाणां गुणः श्लौ' इति अभ्यासस्य गुणे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति गुणनिषेधे 'अनेनिजम्' इति ।

**अनिजत्**—इरित्संज्ञक 'णिज्' धातोर्लुङि 'णो नः' इति धातोर्णस्य नत्वे 'लुङः स्थाने तिप्यनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लुङ्लङ्' इत्यटि अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'इरितो वा' इति विभाषया च्लेरङादेशे अनुबन्धलोपे ङित्वाद् गुणाऽभावे 'अनिजत्' इति । अङभावे च्लेः सिच्यनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यपृक्तसंज्ञकस्य तिपस्तकारस्य ईटि 'वदव्रज'ेति वृद्धौ जस्य कुत्वे सस्य षत्वे 'अनैक्षीत्' इति सिद्धं भवति ।

**इयर्ति** ( ई० ३३, ३७, ४७ )—ऋ-धातोर्लटि तिपि शपि शपः श्लौ अनुबन्धलोपे 'श्लौ' इत्यनेन द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वं बाधित्वा 'अर्तिपिपर्त्योश्च' इत्यनेनाभ्यास-ऋकारस्य इत्वे रपरत्वे हलादिशेषे च कृते उत्तर-खण्डऋकारस्य गुणे रपरत्वे 'इ अर ति' इत्यवस्थायाम्, 'अभ्यासस्याऽसवर्णे' इत्यनेनेयङादेशे 'इयर्ति' इति सिद्धम् ।

**इयृति** ( ई० ४२ )—गत्यर्थक-ऋ धातोर्लटि तत्स्थाने झिप्रत्यये मध्ये शपि तस्य 'जुहोत्यादिभ्यः श्लुः' इत्यनेन श्लुकृते अनुबन्धलोपे श्लाविति द्वित्वेऽभ्यास-संज्ञायाम् उरदत्वे प्राप्ते 'अर्तिपिपर्त्योश्च' इत्यनेन इयङि, ङकारस्येत्संज्ञायां लोपे च अभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इत्यनेन झस्यादादेशे 'इयृति' इति सिद्धम् । ननु 'बहुलं छन्दसि' इत्यनेन इत्वविधानेनैवोक्तरूपसिद्धौ पुनः 'अर्तिपिपर्त्योश्च' इत्यत्रार्तिग्रहणं किमर्थमिति चेत्? सत्यम्, लोकेऽप्यस्य धातोः प्रयोग इति ज्ञापनार्थत्वात् ।

**ऐयः** ( ई० ३९, ४४, ४६ )—ऋधातोर्लङि तिपि सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि, 'जुहोत्यादिभ्यः श्लुः' इति श्लौ 'श्लौ' इति धातोर्द्वित्वे 'उरत्' इति अभ्यासस्य ऋकारस्याकारे रपरे 'हलादिः शेषः' इति लोपे 'अर्तिपिपर्त्योश्च' इति अभ्यासस्याकारस्येत्वे 'अभ्यासस्यासवर्णे' इतीयङि 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धौ 'सार्वधातुकार्धधातुकयोः' इति गुणे 'इतश्च' इतीकारलोपे हल्ङ्याब्भ्यः' इति तकारस्य लोपे 'रेफस्य विसर्गे 'ऐयः' इति रूपम् ।

**आरत्** ( ई०४० )—ऋधातोर्लुङस्तिपि च्लौ 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङि अनुबन्धलोपे 'ऋदृशोऽङि गुणः' इति गुणे रपरत्वे आटि वृद्धौ तिप इकारलोपे 'आरत्' इति ।

**बभ्धः** ( ई० ३६, ३८, ४५, ४७, ५६ )—भर्त्सनदीप्त्यर्थक-भस् धातोर्लटि तत्स्थाने तसि, शपि, तस्य श्लौ, 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अभ्यासे चर्च' इत्यनेन जश्त्वे 'बभस् तस्' इति दशायाम्' उपधासंज्ञायां 'घसिभसोर्हलि च' इत्यनेन उपधालोपे 'झलो झलि' इत्यनेन सलोपे 'झषस्तथोर्धोऽधः' इत्यनेन तकारस्य धकारे भस्य जश्त्वे च कृते सस्य रुत्वे विसर्गे 'बब्धः' इति रूपं निष्पन्नम् ।

**जजातः** ( ई० ४१, ५४ )—जननार्थक 'जन्' धातोर्लटि तत्स्थाने तसि मध्ये शपि तस्य श्लुकृते 'श्लौ' इति द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'जनसनखनां सञ्झलोः' इत्यनेन नस्याकारान्तादेशे सवर्णदीर्घे सस्य रुत्वे विसर्गे च कृते 'जजातः' इति सिद्धम् ।

**जज्ञति** ( ई० ३६ )—जननार्थक जन्धातोर्लटि तत्स्थाने झौ शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झस्य अदादेशे झलादित्वाभावात् 'जनसनखनाम्—' इति आत्वाभावे 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यनेन उपधालोपे नस्य श्चुत्वे 'जज्ञति' इति सिद्धम् ।

इति जुहोत्यादिप्रकरणम्

# प्रश्नपत्राणि

## १९४०

शैषिकादिद्विरुक्तप्रक्रियान्तसिद्धान्तकौमुद्यां प्रश्नाः ।

पौर्वशालः, शौवस्तिकः, षाकयज्ञिकः, कापित्थम्, आक्षिकः सामाजिकः, धौरेयः, एतानि सूत्रविग्रहप्रत्ययनिर्देशपूर्वकं साधयित्वा शेष इत्यस्याऽधिकारत्वं विधित्वञ्च किमर्थमिति सुविशदं प्रमाणपूर्वकमभिधीयताम् । १०

मूल्यम्, अपूप्यम्, बहुकः, पौरुषेयः, सर्वजनीनः, आचितिकी, कर्णजाहम्, षाण्मासिकः, एतेषां सूत्रविग्रहाद्युपन्यासपूर्वकं साधुत्वं प्रतिपाद्य, इत ऊर्ध्वन्तु संख्यापूर्वपदानामितीष्टेस्तात्पर्य्यं वर्णयत । १०

सान्तापिकः, म्रदिमा, द्रुत्यम्, औनीनम्, आगवीनः, अविकटः, त्रियतम्, एतानि सूत्रविग्रहप्रत्ययोपन्यासमुखेन सुसंस्कृत्य नासिकाया नतेऽभिधेये कति रूपाणि सन्तीति वदत । १०

मत्काः, वैमुक्तः, विषपुष्पकः, विद्युत्वान्, श्राद्धः, ककुदावर्त्ती, उभयद्युः- एतानि सूत्रतदर्थादिप्रदर्शनपूर्वकं साधयित्वा कमस्त्यस्येति विग्रहे रूपाणि साधयत । १०

अवस्तात्, दक्षिणात्, एकाकी, गरिष्ठः, क्षौद्रकी, मात्रीकरोति, परस्परम्, गतगतः—एतानि सूत्रविग्रहप्रदर्शनपूर्वकं प्रसाध्य अनुकम्पितो देवदत्त इति विग्रहे ससूत्रं रूपाणि साधयत । १०

साधीयान्, द्वैतीयीकः, असुतः, अर्घ्यः, खारीकम्, राजतम्, बहुधा, शलालुकः, एषां साधुत्वं प्रदर्श्य, अनुकम्पित उपेन्द्रदत्त इति विग्रहे रूपाणि सूत्रार्थविग्रहप्रदर्शनपूर्वकं साधयत । १०

सूचना—एषु पञ्च प्रश्नाः स्वेच्छया समाधेयाः ।

## १९४०

सिद्धान्तकौमुद्यां भ्वाद्यदाद्योः प्रश्नाः

अस्तिसिचोऽपृक्ते, आम्प्रत्ययवत्कृञोनुप्रयोगस्य, कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि, णेरनिटि, विदांकुर्वन्त्वित्यन्यतरस्याम्, एषां मध्ये त्रयाणां व्याख्यानं पदकृत्योदाहरणप्रत्युदारणप्रदर्शनपूर्वकं विधेयम् । १०

२ स्पर्ध धातोर्लिटि, अजधातोराशीर्लिङि, क्रमेः कमेर्वा लुङि, गमेर्लृटि श्वयतेर्वा लुङि, रूपाणि साधनप्रकारोपन्यासपूर्वकाणि लेख्यानि। १०

३ घटादौ नट, श्रा, ज्ञा, मदी धातूनामुल्लेखप्रयोजनमभिधाय शीलं चालयति, शाखां चलयतीति प्रयोगयोरुपपत्तिर्विधेया। १०

४ अभूत्, एधिषीष्ट, धूपायाञ्चकार, अदणुतः, अदिथाः, एते प्रयोगाः साधु साधनीयाः। १०

५ जुगुप्सांचक्रे, अक्राक्षीत्, यूयात्, दायास्ताम्, अजागरुः, एषां साधुत्वप्रकारो दर्शनीयः। १०

अथवा

घ्रेयात्, अगास्त, ऊवे, अध्यैयाताम्, उड्ढि, एते प्रक्रियोपन्यासपूर्वकं साध्याः।

१९४१

शैषिकादिद्विरुक्तप्रक्रियान्तसिद्धान्तकौमुद्यां प्रश्नाः।

१ काशिका, बाहुवर्त्तकः, युष्मदीयः, मासिकम्, औपनीविकः—एतानि विग्रहसूत्रार्थविन्यासपूर्वकं संस्कृत्य, 'ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिः पूर्वत्रे' त्यस्याशयः प्रस्फुटं प्रदर्शनीयः। १०

२ मार्त्तिकः, शौकम्, प्राभूतिकः, प्रातिकुलिकः वार्धुषिकः—एतेषां सूत्रतदर्थविग्रहप्रदर्शनपूर्वकं साधुत्वं प्रतिपाद्य, शैषिकेषु पञ्चार्थाः सोदाहरणं प्रदर्शनीयाः। १०

३ साहस्रम्, यशस्यः, अर्घ्यः, द्विमास्यः, शून्यम्—एतानि सूत्रार्थविग्रहप्रदर्शनमुखेन साधयित्वा, 'असमासे निष्कादिभ्य' इति सूत्रस्थाऽसमासग्रहणेन किं ज्ञाप्यत इति स्पष्टं वदत। १०

४ पञ्चकः, बहुनैष्किकम्, श्राद्धम्, त्रैस्वर्य्यम्, आप्रपदीनः—एतानि साधयित्वा 'सङ्ख्यायाः संवत्सरे'तिसूत्रीयसंवत्सरग्रहणस्य किं फलमिति साधु वदत। १०

५ अर्णवः, उभयेद्युः, श्रेयान्, शामीवत्यः, इतरेतराम्—एतानि संस्कृत्य, अत्यन्तस्वार्थिककनो ज्ञापकं स्पष्टं वदत। १०

६ वासुदेवः, वेणुकः, चतुः, भद्राकरोति, गतगता—एतेषु विशेषकार्य्याणि निर्दिश्य 'दलद्वये टाबभाव' इति कारिका सोपपत्तिकं व्याख्यायताम्। १०

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः।

## १९४१

### सिद्धान्तकौमुद्या भ्वाद्यदादिप्रकरणयोः प्रश्नाः।

सूचना—केचन पञ्च प्रश्नाः समाधेयाः।

१ भवेत्, ऐधिढ्वम्, उवोख, वव्रके, विव्यतुः—एते प्रयोगा विशेषवक्तव्योपन्यासपूर्वकं साधनीयाः। १०

२ अचीकमत्, पणायांचकार, धिनोति, पिप्ये, दिग्ये—एते प्रयोगाः साध्यन्ताम्। १०

३ एधि, और्णावीत्, मीमांसते, अरोदत्, अजागरीत्, अधिजगे, शाधि, अभीयात्, दीध्ये, प्राणिति—एतेषु पञ्च प्रयोगाः साध्यन्ताम्। १०

४ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च, उपसर्गप्रादुर्भ्यामस्तिर्यच्परः—इति सूत्रयोरेकमुदाहरणोपन्यासपुरस्सरं व्याख्याय, गुहू-धेट्-श्विधातूनां लुङि प्रथमपुरुषैकवचने कति रूपाणि कानि कथं चेति लिख्यताम्। १०

५ संज्ञायाः कार्यकालत्वादित्यादिकाः कारिकाः स्फुटं व्याख्येयाः। १०

६ (क) एतेन 'रजो विश्रामयन् राज्ञां धुर्यान् विश्रामयेति सः' इति व्याख्यातम्।

(ख) कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद् गदतो मम' इति।

(ग) विशीर्णतायामयं, शातनं तु विषयतया निर्दिश्यते।

एते सन्दर्भाः स्फुटं प्रसङ्गनिर्देशपुरस्सरं व्याख्येयाः। १०

## १९४२

### सिद्धान्तकौमुद्याः समासादि-प्राग्दीव्यतीयप्रकरणान्तभागे प्रश्नाः।

१ प्रत्यक्षम्। उपसमित्। त्रिपथम्। एणीपदः। उषासासूर्यम्। अप्सुयोनिः। अग्निमिन्धः। दूडभः। रम्ययूना। कारीषगन्धीबन्धुः। प्राध्वंकृत्वा। द्वादश। हरितजम्भा। कुशकाशम्। वाङ्मनसे। एषु दश प्रयोगाः सुस्पष्टं सविग्रहं साध्यन्ताम्। १०

२ माण्डूकिः। हैतनामः। शुक्रा। मानुष्यकम्। द्वितन्त्रः। वैत्रकाः। लोहिणी। षात्वणत्विकः। आङ्गकः। सामिधेनी। ऐरावतकः। मानगरः। काश्यपिनः। जम्बु। शल्यः। एषु दश रूपाणि सविग्रहं साधनीयानि। १०

३ 'गोत्रे स्वैकोनसंख्यानामि'त्यादिकारिकाद्वयं सोदाहरणं सुस्पष्टं व्याख्यायताम्। १०

४ वुञ्छणिति सूत्रोपात्तयोस्तत्तत्प्रकृतिप्रत्यययोः पृथक् स्वरूपं निर्दिश्य, उपज्ञोपक्रममित्यादि—एण्या ढञ्-इत्यनयोरष्टाध्याय्यां कस्मिन्नध्याये पादे च पाठ इति विलिख्य तदुदाहरणार्थो लेख्यः। १०

५ 'पूर्वस्यैवेदम्। भस्त्रैषाद्वेतिलिङ्गात्।', 'पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य ग्रहणार्थम्।', 'इति अणो लुक् तु न भवति। प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात्।' एषां त्रयाणां वाक्यानामर्थः सफलं सुस्पष्टं प्रदर्शनीयः। १०

१९४२

सिद्धान्तकौमुद्या दीव्यतीयाधिकारादि भ्वाद्यन्तभागे प्रश्नाः।

१ श्वगणिकः, पद्याः, प्राकारीयः, परमनैष्किकः, द्वैशाणम्, षष्टिकः, आकालिकः—एतेषाम्प्रयोगाणां सूत्रविग्रहप्रकृतिप्रत्ययादिप्रदर्शनपुरःसरं साधनं विधेयम्। १०

२ श्रौत्रम्, सङ्कटम्, द्रिमयम्, विंशः, चर्मण्वती, तमिस्रा, अधुना—एतान् साधयित्वा, नासिकायाः नतमिति विग्रहे कानि रूपाणि, कथञ्च? इति सुस्पष्टं लिखत। १०

३ क्षोदिष्ठः, षडिकः, काकतालीयः, आशितङ्गवीनम्, देवत्रा, दुःखाकरोति—प्रकृतिप्रत्ययादिप्रदर्शनेन संसाध्य, अर्थञ्चैषां विलिख्य, 'प्राणिस्थादातो लजन्यतरस्यामि'ति सूत्रे लचश्चकारस्य प्रयोजनम्प्रदर्शनीयम्। १०

४ भवेयुः, देधे, विव्यतुः, पणायति, दिप्ये—एतान् संसाध्य, एकाच उपदेशेऽनुदात्तादिति सूत्रस्थैकाज्ग्रहणस्य फलम्प्रदर्शयत। १०

५ अघाक्षि, प्रत्यष्वङ्क्त, अक्राष्टाम्, अशिश्वियत्, अदर्शत्-एतेषां साधनम्प्रदर्श्य, घटादीनां मित्करणस्य प्रयोजनं लिखत। १०

६ (क) पुमाङ्ज्योऽग्रामणीपूर्वात्, किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे-अनयोः सूत्रयोः पदच्छेदः प्रदर्शनीयः।

(ख) कार्मस्ताच्छील्ये, अर्धात्परिमाणस्य पूर्वस्य तु वा—इतीमे सूत्रे कस्मिन्नध्याये पादे च पठिते, इति प्रदर्श्य तदुदाहरणार्थो लेख्यः। १०

सूचना—एषु पञ्चैव प्रश्नाः समाधेयाः। षष्ठश्च प्रश्नोऽवश्यं समाधेयः।

१९४२

सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

राजकीयम्, सुपाञ्चालकः, गार्ग्यम्, अर्जुनकः, छागलेयिनः, व्रीह्यः, धानुष्कः, दैष्टिकः, सभ्यः, आर्षभ्यः—एते प्रयोगाः प्रकृतिप्रत्ययविग्रह-सूत्रनिर्देशपुरःसरं साध्याः । १०

शातमानम्, यशस्यः, पात्र्यः, चातुर्मासी, पौरोहित्यम्, समांसमीना, बिना, कियान्, त्वत्काः, वार्तः, एतेषां साधुत्वं साधु विधेयम् । १०

अमुतः, उपरि, बंहिष्ठः, यतमः, द्विपदिकाम्, वाचिकम्, विप्रत्रा, मद्राकरोति, एतान् प्रयोगान् सम्यक् संसाध्य, अर्था एतेषां हिन्दीभाषायां लेखनीयाः । १०

हस्ती, मुखरः, पौनः पुनिकः, बैल्वम्—एतान् संसाध्य, दलद्वये टाबभाव इति कारिका संक्षेपेण शङ्कासमाधिपुरःसरं व्याख्येया । १०

अस्य-अस्तीति विग्रहे सिकता-कम्-शब्दाभ्याम्, अनुकम्पित उपेन्द्र-दत्त इति विग्रहे उपेन्द्रदत्तशब्दाद् यानि रूपाणि तानि विलिख्य, ऋतो-र्वृद्धिमद्विधाववयवानाम् इति वार्त्तिकार्थः स्पष्टं लेखनीयः । १०

(क) तत्प्रकृतवचने मयट्, पुराणप्रोक्तेषु ब्राह्मणकल्पेषु—अनयोर्वाक्यार्थं निरुच्य, लक्ष्येषु संगमय्य च, छ्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणना-माश्वरणनामाख्याताट्ठक्, आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मण-राजन्यात् एतयोः पदच्छेदः कार्यः ।

(ख) इद्गोण्याः, र ऋतो हलादेर्लघोः, इमे सूत्रे कस्मिन्नध्याये पादे च पठिते इति स्पष्टं लेखनीयम् । १०

सूचना—एषु पञ्चैव प्रश्नाः स्वेच्छया समाधेयाः अन्तिमस्तु न हेयः ।

१९४२

सिद्धान्तकौमुद्या भ्वादिगणादिनामधात्वन्तभागे प्रश्नाः ।

भविता, एधामास, श्रग्वन्ति, जुगुप्सते, अशिश्रियत्, एते प्रयोगा धात्वर्थनिर्देशपुरस्सरं यथाशास्त्रं साधनीयाः । १०

ऊर्णुनाव, विदांकरोतु, जुहुधि, अजनि, सिन्वन्ति, विशेषशास्त्रप्रदर्शनेनैते साधु साधनीयाः । १०

३ वव्रश्च, रुन्धः, संस्करोति, पुनाति, अचूचुरत्, एतेषां साधुत्वं प्रदर्श्यताम्। १०

४ अपीपवत्, अतिष्ठिपत्, जिघृक्षति, धीप्सति, बोभूयते, विग्रहं प्रदर्श्य सशास्त्रमिमे साध्याः। १०

५ बोभवीति, वर्वृतीति, अशनायति, अप्सरायते, लोहितयति, एते सविग्रहं सशास्त्रं प्रसाध्याः। १०

६ भवेत्, सुषुपतुः, जुहवाञ्चकार, औननत्, ईप्सति, सधात्वर्थनिर्देशं सविग्रहं सशास्त्रं सर्वं साधनीयम्। १०

७ प्राणिणत्, धुधूषति, जञ्जप्यते, आरति, मुण्डयति माणवकम्, एषु सविग्रहं तत्तत्कार्य्यं प्रदर्शयन्तु। १०

सूचना—एषु पञ्चैव केचन समाधेयाः।

१९४४

शैषिकादिद्विरुक्तप्रक्रियान्तसिद्धान्तकौमुद्यां प्रश्नाः।

१ पौर्वमद्रः, शौवस्तिकम्; ऐहलौकिकम्, कालापाः, कौटिलिकः। एते प्रयोगाः सूत्रोपन्यासपूर्वकं तत्तत्प्रत्ययान् अर्थविशेषांश्च प्रदर्श्य साधनीयाः। १०

२ वैभाजित्रम्, साक्तुकः, आचार्यभोगीनः, अर्द्धद्रौणिकम्, द्वैवार्षिकः, एते विग्रहप्रदर्शनपूर्वकं साधु साधनीयाः। १०

३ हैयङ्गवीनम्। चिपिटम्। कतिपयथः। पञ्चकः। गुडापूपिका। एते प्रयोगा विग्रहप्रदर्शनपूर्वकं साधु साधनीयाः। १०

४ विषुणः। मायिकः। एतर्हि। अपरेण ग्रामम्। क्षौदिष्टः। एते प्रयोगाः सूत्रनिर्देशपुरःसरं साध्याः। १०

५ लघीयान्। शूद्रकः। रासभकः। वाचिकः। काकतालीयः। एते प्रयोगाः सूत्रनिर्देशपूर्वकं साधनीयाः। १०

६ शालावत्यः। अर्वाचीनम्। पटपटाकरोति। मद्राकरोति। एकैकस्मै देहि। एतान् विग्रहवाक्यप्रदर्शनपूर्वकं साधयन्तु। १०

७ शेषे इति सूत्रस्य विधित्वमधिकारत्वं वेत्युपपाद्य दलद्वये टाबभावः इत्यादि कारिका सोदाहरणं व्याख्येया। १०

सूचना—एषां मध्ये केचन पञ्चैव प्रश्नाः समाधेयाः

१९४४

सिद्धान्तकौमुद्या भ्वाद्यदादिगणयोः प्रश्नाः ।

१ युष्मद्युपपदे इत्यादेरर्थं लक्ष्ये घटयित्वा, लुटा यासुट् न बाध्यते इत्यत्र केन रूपेण बाधः ? कथञ्च विषयभेदः ? इति सर्वं सुस्पष्टं लिख्यताम् । ८

अथवा

प्रहासे च मन्योपपदे इति सूत्रं सोदाहरणं व्याख्याय सार्वधातुके किं चिकीर्ष्यादिति विशदं व्याख्यायताम् ।

२ एधाञ्चकृषे, त्रेप, पस्पर्द्धे, देधे, ददते, आनर्द, वव्रके, ऊखतुः, आनृजे, विव्यतुः, एतेषां सिद्धिप्रकारो निरूपणीयः । १०

३ आतीत्, न्यषेधीत्, अखदीत्, अग्लुचत्, अशावीत्, अकटीत्, एतान् साधयित्वा षोपदेशलक्षणं व्याख्यायताम् । ७

४ संज्ञायाः कार्यकालत्वादित्यत्र कार्यकालपक्षेऽङ्गस्य यत्र द्विरुक्तिस्तत्रैवेत्यत्र वीजं निरूप्य, यथोद्देशपक्षेऽवयवस्य द्वित्वमिति मते वस्तुत इत्याद्युक्तौ हेतुं प्रतिपादयत । ७

५ गुपू, प्यायी, भृञ्, कृष्, गाङ्, ह्वेञ्, श्विधातूनां लुङ्येकवचने कियन्ति रूपाणि ? कथञ्च सिध्यन्ति ? ८

अथवा

गणान्तरे पठितानां धातूनां घटादावनुवादे शप् भवति न वेति विविच्य, मारणतोषणनिशामनेषु ज्ञाधातोर्मित्वे उदाहरणानि प्रदर्श्य, ज्ञप मिच्चेति लेखने वाचोयुक्तिः प्रतिपाद्यताम् ।

६ प्रहण्मि, जघसिथ, अवधीत्, जहि, अख्यत् आत्थ, ऊर्णुनुविथ, अवोचत्, ईयतुः, अधिजगे, विदाङ्करोतु, अजागरीत्, एषु केचनाष्टौ प्रयोगाः साधु साधनीयाः । १०

१९४५

शैषिकादिद्विरुक्तप्रक्रियान्तसिद्धान्तकौमुद्यां प्रश्नाः ।

१ एणीपचनीयः, आग्निष्टोमिकः, सांवहित्रम्, कौपिञ्जलः, एते प्रयोगाः सूत्रनिर्देशपूर्वकं सविग्रहं साधनीयाः । १०

२ सौखशायनिकः, ऐकान्यिकः, शीर्षण्यः, यवापूप्यम्, एतान् सूत्रनिर्देशपूर्वकं संसाध्य नातः परस्येति सूत्रस्थतपरकरणस्यासाधारणं फलं ब्रूत । १२

अथवा

पङ्क्तिविंशतीत्यादिसूत्रोपात्तेषु शब्देषु प्रकृतिविशेषान् प्रत्ययविशेषान् निपातितकार्यस्वरूपाणि च प्रदर्श्य आधिराज्यम् , समांसमीना, द्वैकुलिजिकः—एतेषां विग्रहादिकं विलिख्य साधुत्वं ब्रूत ।

३ अवभ्रटम् , कतिपयथः, गर्दभाण्डीयः, इन्द्रियम् , ऊर्जस्वलः, अर्थवान् , एतान् विग्रहनिर्देशपूर्वकं साधयन्तु । ८

४ अमुतः, ऐषमः, अपरेण ग्रामम् , षडिकः, लौहितध्वज्यः, अत्र केष्वर्थेषु के प्रत्ययाः कथं चेमे सिध्यन्ति ? १०

अथवा

कपोतपाकाः, आशितङ्गवीनम् , मोदकिकम् , लोहिनिका—साधनीया इमे प्रयोगाः प्रदर्शनीयाश्चैतेषामलौकिकविग्रहाः ।

५—शम्बा करोति, एकैकयाहुत्या, यथायथं ज्ञाता—अत्रत्यविशेषकार्याणि प्रदर्श्य द्वन्द्वं रहस्येत्यादि सूत्रं सोदाहरणं लेख्यम् । १०

१९४५

सिद्धान्तकौमुद्या भ्वाद्यदादिगणयोः प्रश्नाः ।

१ भवेयुः, एधांचक्रे, तिप्सीष्ट, जिगाय, धिनु, जगृहिषे, अपोषीत् , मिमिदे, स्यन्त्स्यति, दिग्ये, एते प्रयोगाः विशेषसूत्रोपन्यासेन संसाधनीयाः । १०

अथवा

बभूव, प्रणिभवति, ऐधिढ्वम् , निषेधति, उचोख, विस्तम्भते, सायात् , पिप्ये, अनुष्यन्दते, एतान् सम्यक् साधयत ।

२ एकाचः किम् यङ्लुग्व्यावृत्तिर्यथा स्यादिति पङ्क्तेराशयं विशदं व्याख्याय 'उपदेश इत्युभयान्वयि' इत्यत्र प्रमाणं फलञ्चोपपादनीयम् । १०

अथवा

शमो दर्शने, यमोऽपरिवेषणे, स्खदिरवरिभ्याञ्चेति गणसूत्रत्रयं व्याख्याय स्वाभिमते चोदाहरणयोर्व्यत्यासः सम्यक् प्रदर्शनीयः ।

३ सस्वरिव, जुगुप्सते, परिष्कण्णः, देभतुः, अयंसीत् , सजति, ईजे, अवोढ, वत्स्यति, ऊयुः, विव्याय, जुहाव । एषु केषाञ्चिदष्टानां सिद्धिप्रकारं प्रदर्श्य, णोपदेशलक्षणं व्याख्यायताम् ।

४ क्षमूष्, कमु, द्युत्, स्यन्दू, गुहू, स्नृ, दृशिर्, धेट् धातूनां लुङ्येकवचने कति रूपाणि, कथञ्च तानीति स्पष्टं प्रतिपादनीयानि । १०

५ आर्तीत्, आदत, अद्विषुः, यूयात्, अस्तावीत्, अभीयात्, अध्यगात्, विदांकुरु, सुषुषुपतुः, ददरिद्रौ, शाधि, सधि, एतेषु केचनाष्टौ प्रयोगाः प्रसाध्याः । १०

१९४६

सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ आस्माकीनः, शौवस्तिकम्, आयसम्, तैत्तिरीयाः, कांस्यम्, एतान् सविग्रहं सूत्रनिर्देशपूर्वकं साधयत । १०

२ वैशस्त्रम्, शरण्यः, आत्मनीनम्, द्वैशाणम्, विग्रहादिनिर्देशपूर्वकम् एतान् संसाध्य ठगधिकारे षित्त्वस्य फलम् ब्रूत । १०

३ कडङ्करीयः, महानाम्निकः, कार्मुकम्, स्तेयम्, सर्वपथीनः, एषां साधुत्वं ससूत्रं विग्रहादिनिर्देशपूर्वकं प्रतिपादयत । १०

४ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायाम् भवन्ति मतुबादयः ॥

सोदाहरणां कारिकामिमां व्याख्याय, कर्णजाहम्, क्षेत्रियः, षष्ठः, तमिस्रा—एतान् साधयत । १०

५ सिकताः सन्त्यस्मिन् देशे, विवृद्धौ कर्णौ यस्य, इति विग्रहे ससूत्र रूपाणि प्रतिपाद्य, अनुकम्पितः उपेन्द्रदत्तः इति विग्रहे सर्वाणि रूपाणि सूत्रनिर्देशपुरस्सरम् प्रतिपादयत । १०

६ एकशालिकः, द्विपदिकाम्, बहुशः, बीजाकरोति, देवत्रा, एकैकम्, सूत्रविग्रहादिनिर्देशनपूर्वकम् एषां सिद्धिप्रकारं प्रदर्शयत । १०

सूचना—एषु प्रश्नेषु निजेच्छया केचन पञ्चैव समाधेयाः ।

१९४६

सिद्धान्तकौमुद्या भ्वाद्यदादिगणयोः प्रश्नाः ।

१ भवतात्, एधामास, देधे, आतीत्, ऊखतुः, ववृके, आनृजे, विवयिथ, अक्रमीत्, एतेषु पञ्चानां प्रयोगाणां विशेषकार्योपन्यासेन साधुत्वमभिधीयताम् । १०

२ तद्दृणोति, अस्यदत् , विव्यथे, श्रपयति, अबोधिष्ट, असौषीत्, सस्वरिम, प्रणिमयते, परिष्कण्णः, एषु पञ्च प्रयोगान् सम्यक् साधयत । १०

३ संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते इत्यादिपद्यानामभिप्रायं स्फुटमुपवर्ण्य, तत्र वस्तुत इत्याद्युक्तौ किं बीजमिति स्पष्टं प्रतिपादयत । ८

अथवा

कृञ्चानुप्रयुज्यते लिटीतिसूत्रे भ्वस्तिलाभः कथमिति विशदं निरूप्यताम् ।

४ ऊयतुः, अह्वत् , अश्वत् , शिश्वाय–एतेषां सिद्धिप्रकारं प्रदर्श्य, स्यन्द् , कृपूधात्वोर्लृट्येकवचने, गुपू , क्षुष् , स्तृ–धातूनां लुङ्येकवचने, वेञ्-धातोर्लिट्येकवचने कति रूपाणि कथञ्च तानीति स्पष्टं सकारणं प्रतिपादयत । १२

५ ऊर्णुनाव, अव्ययै, सुषुप्वाप, दरिद्रांचकार, अवकाः, प्राणिति, रुदिहि, विदांकुरु, एतेषु केषाञ्चित् पञ्चानां सिद्धिमुपपाद्य, अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमित्यत्र प्रमाणं फलञ्चोपपादनीयम् । १०

अथवा

वध्यात् , आत्थ, मृड्ढि, रुद्यात् , विशेषकार्यविधायकसूत्रोपन्यासपुरस्सरमेतेषां सिद्धिप्रकारं प्रदर्श्य, 'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् । पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवे'ति पद्याशयो विशदं स्फुटीकरणीयः ।

१९४७

सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ ऐषमस्त्यम् , पौर्वाधिकाः, पूर्ववार्षिकः, श्रविष्ठः, नैयग्रोधम् , श्वापदम् । प्रयोगानेतान् सूत्रोपन्यासपूर्वकं सलौकिकविग्रहं प्रसाधयत । १०

२ शेषे—इति सूत्रस्य लक्षणत्वाधिकारत्वयोः प्रयोजनं प्रदर्श्य, युवयोर्युष्माकं वा अयम् , पथः अनपेतम् , ओजसा वर्तते—एषु विग्रहेषु सिद्धरूपाणि ससूत्रं प्रदर्शयत । १०

३ पाथेयम् , सार्वभौमः, यौजनशतिकः, प्राशित्रम्, प्रथिमा, परम्परीणः, अवनाटम् , कियान् , अभीकः, चर्मण्वती । एषु केचन षट् प्रयोगाः विग्रहादिनिर्देशपूर्वकं ससूत्रं साध्यन्ताम् । १२

४ वाचालः, दोहीयसी, भूयान् , बहुपटुः । एषां सिद्धिप्रकारं ब्रूत । ८

अथवा

चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च॥

कारिकेयं सोदाहरणा व्याख्यायताम्।

५ आभिजित्यः, आशितंगवीनम्, कृष्णीकरोति, उन्मनीस्यात्, मद्राकरोति, द्वन्द्वम्। सूत्रविग्रहादिनिर्देशपूर्वकमेषां साधुत्वम् प्रतिपादयत। १०

१९४७

सिद्धान्तकौमुद्या भ्वाद्यदादिगणयोः प्रश्नाः।

१ भवेयुः, ऐधिढ्वम्, उवोख, आनृजे, आञ्छ, विव्युः, विस्तम्भते, पणायति, एतेषु पञ्च प्रयोगाः सम्यक् संसाध्य, टुओश्वि धातोर्लुङि प्रथमपुरुषे रूपाणि प्रदर्शयत। ११

२ पिप्ये, जिगाय, धिनोति, मिमिदे, स्यन्त्स्यति, प्रज्वलयति, अरंस्त, अगूढ, एषु केषाञ्चित् पञ्चानां प्रयोगाणां सिद्धिप्रकारं प्रदर्श्य, धेट्धातोर्लुङि प्रथमपुरुषैकवचने रूपाणि सकारणमुपपादयत। ११

३ 'सार्वधातुके किम् चिकीर्ष्यात्' इत्यादि, 'एकाच इति किम् यङ्लुग्व्यावृत्तिर्यथा स्यात्' इत्यादि, 'ङित्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽपि' इत्यादि, एतासु तिसृषु कामप्येकां फक्किकां सविस्तरमुपवर्णयत। ८

४ दिग्ये, परिष्कण्णः, जुगुप्सते, अधाक्षीत्, ऊवतुः, विव्याय, एषु चतुरः प्रयोगान् संसाध्य षोपदेशलक्षणं प्रतिपादयत। १०

५ आसांचक्रे, और्णावीत्, आत्थ, ईयतुः, स्तात्, सुषुषुपतुः, ददरिद्रौ, अजागरीत्, एषु कांश्चित् पञ्च प्रयोगान् तत्तद्विशेषकार्योपादकसूत्रनिर्देशपुरस्सरं साधयत। १०

१९४८

विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः।

१ तापनीयः, पारशवः, सावसिकः, लालाटिकः, दैष्टिकः, आतिथेयम्, विश्वजनीनम्, प्रासादीयम्, एते प्रयोगाः सूत्रविग्रहनिर्देशपूर्वकं साधनीयाः। १०

२ वार्तिकम्, सार्वलौकिकः, आढकीना, शैर्षच्छेदिकः—ससूत्रं सविग्रहं चैतान् संसाध्य वृद्धपायलाभशुल्कोपदानां परस्परं भेदं प्रदर्श्य, अंशवस्नभृतीनामर्था अपि लेखनीयाः। १०

अथवा

वारिपथिकम्, द्विवार्षिकः, वैशाखः, जाड्यम्, पौरोहित्यम्, सम्मुखीनाः, कौपीनम्, अधित्यका—सूत्रविग्रहनिर्देशपुरस्सरमेतेषां सिद्धिप्रकारः प्रदर्श्यताम्।

३ कतिपयथः, राजन्वती, ज्योत्स्ना, कुतः, पुरस्तात्, द्वैधम्, ज्यायान्, वाचिकः। एषु केचन पञ्चैव प्रयोगाः साधु साधनीयाः। १०

४ कतरः, द्विपदिकाम्, गार्गीभवति द्वितीया करोति, एकैकया—विशेषसूत्रलौकिकविग्रहोपन्यासपूर्वकमेषां साधुत्वं प्रदर्शनीयम्। १०

५ शताच्च ठन्यतावशते। गोद्व्यचोऽसंख्यापरिमाणश्वादेर्यत्। तद्धरति वहत्यावहति भाराद्वंशादिभ्यः। नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। ऐनबन्यतरस्यामदूरेऽपञ्चम्याः। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे। एषु केषाञ्चिच्चतुर्णां सूत्राणां पदच्छेदं विधाय, अर्थोदाहरणे विलिख्य, अष्टाध्यायीगताध्यायसंख्याऽपि प्रदर्शनीया। १०

१९४८

सिद्धान्तकौमुदीदशगण्यां प्रश्नाः।

१ अभूवन्, एधाञ्चकृढ्वे, ऊर्दते, तुतुम्पतुः, धिनोति, श्रपयति, प्रण्यपप्तत्, परिषहते—एतेषु यथेच्छं पञ्च प्रयोगान् साधयित्वा, क्रुश्धातोर्लुङि प्रथमपुरुषे रूपाणि प्रदर्शयत। १०

२ गूहति, भ्रियात्, जह्वार, आरिथ, तेरुः, पर्यष्वङ्क्त, ऊषतुः, विव्याय—एषु यथाभिलाषं पञ्चानां रूपाणां सिद्धिं विधाय गाङ्धातोर्लेटि प्रथमपुरुषे रूपाणि लेख्यानि। १०

३ 'यद्यपि ञिच्चेत्ययमपवादः' इत्यादिः, 'इह सवर्णदीर्घस्य अभ्यासग्रहणेन ग्रहणात्' इत्यादिः, 'अत्र वकारस्य हल्परत्वाद् उपधायां चेति दीर्घे प्राप्ते' इत्यादिः एतासु तिसृषु कामप्येकां फक्किकां सप्रपञ्चं व्याख्यायताम्। १०

४ अध्यगीष्ट, सुषुप्वाप, शाधि, धत्तः, श्राम्यति, प्रहिणोति, जिघाय—एषु केषामपि पञ्चानां सिद्धिप्रकारमुपवर्ण्य कृष्धातोर्लुङि प्रथमपुरुषैकवचने रूपाणि प्रदर्शयत। १०

५ शिण्ढि, संस्क्रियात्, स्कुनोति, ग्रहीता, अपीपिडत्, आमयति। एषु चतुरः प्रयोगान् तत्तद्विशेषकार्योपपादकपूर्णसूत्रोपन्यासपूर्वकं साधयत। १०

१९४९

विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ आश्मः, और्णम् , पारशवः, स्वापतेयम् , सौखशायनिकः, सांस्थानिकः, नैकटिकः, प्रासङ्ग्यः, मूल्यामुद्गाः, पारिषदः, सव्याख्यसूत्रनिर्देशपूर्वकं केचन पञ्चैव साधनीयाः । १०

अथवा

ऊधन्यः, यव्यम् , चारकीणम् , औषधेयम् , औपावह्यो मुञ्जः, आकर्षिकी, रथिकः, धानुष्कः, कौटिलिकः, त्यागिमम् केषांचिदष्टानां ससूत्रोपन्यासं प्रकृतिप्रत्ययौ निर्देश्यौ ।

२ पञ्चकः, तावतिकः, वासनम् , प्रतिकी, अध्यर्थकार्षापणम् , द्विविस्तम् , द्विपण्यम् , पञ्चगोणिः, पुत्र्यः, सार्वलौकिकः, अर्धिकः, एषां केचनाष्टौ ससूत्रनिर्देशं साध्याः । १०

३ चात्वारिंशानि ब्राह्मणानि, आर्त्विजीनो यजमानः, यौजनशतिक आचार्यः । एतां त्रीन् प्राकरणिकसूत्रनिर्देशपुरःसरं संसाध्य एक एव मानि शब्दः कं कमर्थं क्रीडीकृत्याध्यापक-कर्मकर व्याध्युत्सवान् विशिनष्टि ? इति समाधाय संख्याया इति सूत्रे संवत्सरग्रहणस्य फलं लेख्यम् । ( ३ + ३ + ४ ) = १०

४ वाजपेयिकी, अनुप्रवचनीयम् , रामणीयकम् , शालेयम् , त्रिंशंशतम् , इषेत्वकः, पथकः, द्रुमः, मलीमसः, ऐषमः, करिष्ठः, कुतपः । केचन दश ससूत्रनिर्देशं साध्याः । १०

५ चत्वत्कः, औपयिकः प्रवाहिकातः कुरु, सुखाकरोति, भद्राकरोति । एतान् साधयित्वा ससूत्रोपन्यासम् , 'दलद्वये टावभाव' इत्यादि कारिका व्याख्येया 'द्वन्द्वं रहस्येत्यादि सूत्रं वा उदाहरणप्रदर्शनपूर्वकं व्याख्येयम् । १०

१९४१

तिङन्तप्रकरणे ( दशगण्यां ) प्रश्नाः ।

१ सवबुः, एधाञ्चक्रे, ददृदे, न्यषेधत् , आनृजे, आतीत् , अचीकमत, जिगाय एषु पञ्च प्रधानसूत्रोपन्यासपूर्वकं साधनीयाः । १०

२ ईजतुः, ग्लेयात् , पपतुः, अघृक्षाताम् , श्रेमतुः विव्यथे, दिद्युते, अगूढ, जह्वरतुः एषु पञ्च प्रयोगान् साधय । १०

३ जक्षतुः, चकशौ, अबोधत् , अध्यगीष्ट, सुषुपुपतुः, अख्यत, अधीयीत, द्विड्ढि, अचकाः, अगोप्सीत् , अक्रमीत् , अदर्शत् , अशिश्रियत् , नर्तिष्यति, अदित एषु दशानां प्रकृतिप्रत्ययौ निर्दिशत । १०

४ बभर्जतु, अपिपः, ऐयः, शिण्ढि, अतृणेट् चपयति, अपीपृथत् , अजगणत् , औननत् , कंसमजीघतत्-एषु केचन पञ्च साध्याः । १०

५ घेट्, टुओश्वि, ऊर्णुञ् , एषां धातूनां लुङि प्रथमपुरुषैकवचने, वेञ्धातोर्लिटि प्रथमपुरुषद्विवचने सूत्रनिर्देशपूर्वकं रूपाणि प्रदर्श्य नेर्गदेति, उपसर्गात्सुनोतीति, पाघ्राध्मेति च सूत्राणि लेख्यानि । १०

## १९५०

सिद्धान्तकौमुद्या विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ तैन्तिडाकम् , हाटकः, गौरुतल्पिकः, मायूरिकः, सर्वधुरीणः, छन्दस्यम् , सर्वजनीनः, आर्षभ्यः, वार्ध्रम् , नैष्किकम् , तावत्कः, कार्षापणिकी, एषु केषुचिद्दशसु ससूत्रोपन्यासं प्रत्यया लेख्याः । १०

अथवा

कापित्थम् , बाकम् , बाहुका, दार्दुरिकः, पद्याः, औरसः, स्थौलशीर्षम् , माणवीनम् , सर्वीयम् , शत्यम् , कंसिकी, वशातिकम् एषु केषुचिद्दशसु ससूत्रोपन्यासं प्रत्यया लेख्याः ।

२ द्वैशाणम् , द्विपद्यम् , द्व्याढकिकी, अष्टकं पाणिनीयम् , एतान् सशङ्कासमाधि साधयित्वा, पङ्क्तिविंशतीत्यादिसूत्रे निर्दिष्टेषु शब्देषु प्रकृतिप्रत्ययास्तदादेशाश्च निर्देश्याः । १०

३ द्वैवर्षिकः, चातुर्मास्यानि, आकालिकः एतानि प्राकरणिककार्यनिर्देशपूर्वकं संसाध्य कानि धान्यानीति लेख्यम् । ६ + ४ = १०

४ यावतिथः, वटकिनी, क्षेत्रियः, भूमिमान् , राजन्वान् , चूडालः, एतानि प्रकृतिप्रत्ययनिर्देशपूर्वकं साधयित्वा 'अष्ठीवदस्थिमतोः' 'चक्रीवच्चक्रवतोश्च भेदः सप्रमाणं प्रदर्शनीयः । १०

५ 'स्वयःपरुदि'त्यादि सम्पूर्णं सूत्रमुपन्यस्य तत्रत्यानि लक्ष्याणि अर्थनिर्देशपूर्वकं साधयित्वा उपरि, श्रेष्ठः, स्फेष्ठः, भूमा, देवलः एषु प्रकृतिप्रत्यया निर्देश्याः । १०

६ वाक्यादेरित्यादिसूत्रं व्याख्याय मालव्यः, आश्रौमत्यः, अलंकर्मीणः, ससूत्रनिर्देशं साध्याः । १०

सूचना—पूर्वोक्तेषु द्व्यादिकेषु पञ्चसु किमपि चतुष्टयं समाधेयम् । प्रथमो न हेयः ।

१९५०

सिद्धान्तकौमुद्या भ्वादितः चुराद्यन्तेषु भागेषु प्रश्नाः ।

१ भवेयुः, एधिताहे, आनृजे, विव्यये, निषीदति, स्थेयात् , जुहाव, एषु यथेच्छं पञ्चप्रयोगान् ग्रन्थोक्तदिशा साधयित्वा, षोपदेशलक्षणं प्रदर्शनीयम् । १०

२ जहि, शयीत, आत्थ, अध्यगीष्ट, असि, चकासति एतेषु पञ्च प्रयोगा साधु साधनीयाः । १०

३ ह्रूयात् , अबिभरुः, नेनिजानि, जायते, विध्यति, मेद्यति, आप्नुवन्ति, एषु यथारुचि पञ्चप्रयोगान् संसाध्य, णोपदेशलक्षणं लेखनीयम् । १०

४ चकरतुः, विन्दति, अभुनक् , कुर्मः, ज्ञपयति, अर्थनिर्देशपुरस्सरमेते साध्याः । १०

५ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च, अभ्यासे चर्च, अस्तिसिचोऽपृक्ते, आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य, सन्वल्लघुनि चङ्परेऽनग्लोपे, एतेषां सूत्राणाम् अर्थाः सिद्धान्तरीत्या साकल्येन प्रतिपादनीयाः । १०

अथवा

ङित्वोक्तेर्ज्ञायते—क्वचिदनुबन्धकार्येप्यनल्विधाविति प्रतिषेध इत्यादेराशयः प्रतिपादनीयः ।

१९५१

सिद्धान्तकौमुद्या विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

प्रश्नसप्तके पञ्चैव समाधेयाः । प्रथमचतुर्थौ न हेयौ ।

१ त्वङ्मयम् , पिष्टकः, तालम् , औष्ट्रकः, द्रव्यम् , द्रुवयम् माशब्दिकः, मारीचिकम् , औडुपिकः, रथिकः, वैतनिकः, आयुधीयः, औत्सङ्गिकः, एषु केषुचन दशसु ससूत्रोपन्यासं प्रत्यया लेख्याः । १०

२ याचितकम्, शौवापदम्, पर्पिकः, ऐणेयम्, हाटकः, त्रापुषम्, प्राभूतिकः, गौपुच्छिकः, मल्लिका, प्लाक्षम्, तार्कवम्, मार्तिकम्, अत्रापि पूर्वप्रश्नवदेव प्रत्यया लेख्याः। १०

३ वार्द्धुषिकः, सामवायिकः, आपणिकः, दैष्टिकः। एतान् सार्थनिर्देशं ससूत्रोपन्यासं साधयित्वा प्रास्तारिकः, ऐकान्यिकः, देवागारिकः, प्रासङ्ग्यः, एषु प्रकृतिप्रत्यययोरर्थो लेख्याः। १०

४ हृद्यो मन्त्रः, प्रतिजनीनः, स्वापतेयम्, सोदर्यः, आमिद्व्यम्, नस्यम्, अजथ्या, पञ्चजनीनः। एतेषु षट् साधयित्वा पौरुषेय इत्यत्र प्राप्तप्रत्ययपरम्परां निर्दिश्य साधनप्रक्रियां लिखत। १०

५ तस्य निमित्तं संयोगोत्पातौ। तद्वरति वहत्यावहति भाराद्वंशादिभ्यः। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्। यथामुखसंमुखस्य दर्शनः खः। एतानि सूत्राणि ग्रन्थरीत्या व्याख्येयानि। १०

६ आसन्नप्रसवायाः, प्रतिवर्षं प्रसूयमानायाश्च गोर्वाचकौ शब्दौ निर्दिश्य हैयङ्गवीनम्, निविडम्, कर्मठः, कियन्तः, त्रिंशम्, तन्त्रकः, ब्राह्मणकः, पार्श्वकः, श्रोत्रियः, श्राद्धिकः। एषु षण्णामर्थान् निर्दिश्य प्रकृतिप्रत्यया लेख्याः। १०

७ ऊषरः, शृङ्गारकः, शंयुः, इह, उपरिष्टात्, शिवः, क्षौद्रकयः, वैसारिणः, औपयिकः, भद्राकरोति, यथायथम्, एकैकमक्षरम्, सत्या करोति भाण्डं वणिक्। एषु केचन दश सप्रत्ययनिर्देशं साध्याः। १०

१९५१

सिद्धान्तकौमुद्या दशगणीभागे प्रश्नाः।

१ अभूवन्, ऐधिढ्वम्, ऊखतुः, विवयिथ, तिप्सीष्ट, प्रक्रियाप्रदर्शनपूर्वकमेषां साधुत्वमभिधाय, 'दन्त्यः केवलदन्त्यो नतु दन्तोष्ठजोऽपि' इत्यस्याः पङ्क्तेराशयः शङ्कासमाधिभ्यां स्फोरणीयः। १०

२ क्रादीनाञ्चतुर्णां ग्रहणं नियमार्थम्।
संज्ञायाः कार्यकालत्वादित्यादि।
अनयोरन्यतरा फक्किका शङ्कासमाधानाभ्यां विशदं व्याख्येया। १०

३ पर्यवसितं नियमयन, रजो विश्रामयन्, न विश्वसेदविश्वस्ते । एषु पूर्वपक्षप्रदर्शनपूर्वकमधोरेखाङ्कितपदानां साधुत्वमन्वाख्याय, अवधीत्, अध्ययै, शाधि, अजागरीत्, एषां साधुत्वप्रकारोऽभिधीयताम् । १०

४ अविभरुः, ऐयः, बन्धः, क्षीयते, मृग्यति, रुन्धः, संचस्करतुः, एषां यथाशास्त्रं सिद्धिप्रकारमभिधाय ग्रन्थोक्तशङ्कासमाधाने विवृणुत । १०

५ अपप्रथत्, अचिकीर्तत्, औननत्, एषां सिद्धिप्रकारं प्रदर्श्य 'णिच्यच आदेशो न स्यात्' इत्यादिपङ्क्तिः सप्रसंगं व्याख्यायताम् । १०

अथवा

णिच्यच आदेशो न स्यात्, चिन्तेतिपठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्, पूर्वं वृद्धौ सत्यां टिलोपः । एते निर्देशाः फलप्रमाणप्रदर्शनमुखेन व्याख्येयाः ।

१९५२

सिद्धान्तकौमुद्याः विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ तापनीयः, पारशवः, आम्भसिकः, पद्याः (शर्कराः), जन्यः, औपानह्यम् (चर्म) वैभाजित्रम्, वस्निकः, जम्बु, एषु केषामपि षण्णां साधुत्वं प्रकृतिप्रत्ययार्थनिर्देशपूर्वकं दर्शयत । १२

२ द्वित्रिपूर्वादण्च, तदस्मिन वृद्ध्यायलाभशुल्कोपपदा दीयते, आकालिकडाद्यन्तवचने, स्तेनाद्यन्नलोपश्च, होत्राभ्यश्छः, संख्यायाः गुणस्य निमाने मयट्, अत्र किमपि सूत्रपञ्चकं स्फुटं व्याख्येयम् । १०

३ अर्थाच्चासन्निहिते इत्यत्र—असन्निहितपदार्थं प्रदर्श्य अर्थी, अर्थवान्, इत्यनयोरर्थविशेषमुदाहरणदानेन दर्शयत । ८

४ परुत्, करिष्ठः, प्रेयान्, दैविकः, षड्किः, शास्त्रविशेषोपन्यासेन प्रयोगा एते साध्याः । १०

अथवा

तावान्, वैदभृत्यः, वैसारिणः, नवीनम्, तृतीयाकरोति, अर्थनिर्देशपूर्वकं साधु साधनीयाः ।

५ द्वन्द्वे टाबभावः क्लीबे न्वादद्विरहः स्वमोः । समासे सोरलुक्चेति सिद्धं बाहुलकात्त्रयम् । कारिकामिमां व्याख्यात । १०

१९५२

सिद्धान्तकौमुद्याः दशगण्या प्रश्नाः ।

१ भविता, देधे, ऊखतुः, आञ्छ, विस्तम्भते, एतेषां शंकासमाधिभ्यां ससूत्रनिर्देशं साधुत्वं निर्वर्ण्य, षोपदेश णोपदेशकारिका सप्रयोजनं व्याख्येया । १०

२ विव्यथे, अगूढ, ऊयतुः, विव्याय, एतेषां साशङ्कं साधुत्वप्रकारमभिधाय, 'कथं संक्रामयति' 'कथं विज्ञापना भर्तृषु सिद्धमेतत्' इति अनयोर्विभक्तवाक्यघटकासाधुप्रयोगयोर्विचिकित्साप्रदर्शनपूर्वकं साधुत्वमभिधीयताम् । १२

३ अवधीत्, ऊर्णुनाव, आत्थ, अध्ययै, रूयात्, सुसुष्वाप, एषां साधुत्वप्रक्रियामभिधाय, 'तेन स्फायन्निर्मोकसन्धीत्यादि सिद्धम्' इति । अस्य ग्रन्थस्योत्थानप्रकारं प्रदर्श्य साधु समाधानं प्रदर्शनीयम् । १०

४ धत्तः, अशात्, अश्लिक्षत्कन्यां देवदत्तः, एतान् निरुच्य 'स्थानषष्ठीनिर्देशाद्धोपधयोर्निवृत्ति'रित्यस्याशयो वर्णनीयः । १०

५ रुन्धः, शिण्ढि, अबान्धाम्, चिन्तति, कंसमजीघतत्, एषां साधनप्रणाली प्रदर्शनीया । १०

अथवा

'परत्वाद् वृद्धौ सत्यां टिलोपः' 'वृद्धेर्लोपो बलायान्, यत्तु ञादत्करणाद्यन्त्रतीत्यादि माधवेनोक्तं तच्चिन्त्यम्' आदि शब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः, एतानि वाक्यानि सप्रमाणफलनिर्देशं व्याख्येयानि ।

१९५३

सिद्धान्तकौमुद्याः विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ शौकम्, द्रव्यम्, कृत्रिमम्, पाक्षिकः, चातुर्दशिकः, साव्यम्, पौरुषेयः, औपधेयम्, एषु प्रकृतिप्रत्ययार्थनिर्देशपुरःसरं केऽपि षट् प्रयोगाः साध्याः । १२

२ तत्प्रत्यनुपूर्वमीपलोमकूलम्, कर्माध्ययने वृत्तम्, तदस्य ब्रह्मचर्यम्, कालप्रयोजनाद्रोगे, षष्ठ्यारूप्य च, किमपि सूत्रचतुष्टयं सुस्पष्टं व्याख्येयम्। १०

३ (क) अर्धाष्टभृतयोरभविष्यतीति प्रतिषेधो न, गम्यते हि तत्र भविष्यत्ता नतु तद्धितार्थः।

(ख) कतिपयशब्दस्यासंख्यात्वेष्यत एव ज्ञापकाड्डट्, इति दीक्षितोक्तं स्पष्टयत। ८

४ कार्मुकम्, आश्वम्, विना, चिक्कम्, केशकः, कौल्माषी, एषु कान्यपि त्रीणि रूपाणि संसाध्य, भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेस्तिविवक्षायां भवन्ति मतुबादयः। इति कारिका सोदाहरणा साधु व्याख्येया। १०

५ द्रुमः, शन्तिः परारि, एकः, भूमा, बहुपटुः, यथेच्छं कानपि त्रीन् प्रयोगान् साधयित्वा, अनुकम्पितः उपेन्द्रदत्तः इत्यर्थे कति रूपाणि भवन्तीति स्पष्टं निरूपयत। १०

## १९५३

### सिद्धान्तकौमुद्या नियतभागे प्रश्नाः।

१ 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यत्र' यासुटः ङित्त्वविधानफलमभिधाय, अनुबन्धकार्ये अनल्विधौ इत्यस्य प्रवृत्तेरनुगमो विधेयः। १०

अथवा

'ण्यल्लोपाविति' वार्त्तिकं सोदाहरणं व्याख्याय सिद्धान्तपक्षं प्रदर्शयत।

२ वव्रके, उवोख, आनृजे, विव्युः जह्वार, एते साधु साधनीयाः। १०

३ असु, बुध्, शो, वृञ् धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि संसाध्य विलिखत। १०

४ अवधीत्, अख्यत्, सुवै, अभीयात्, अध्यैष्ट, आयन्, एधि, अरुदत्—एषु पञ्चैव सप्रपञ्चं साधनीयाः। १०

५ दिदीये, स्तरिषीष्ट, देभतुः, घत्तः, ऐयः, भृज्ज्यात्, आनर्छ, अभाक्षीत्, शिण्ढि, शशरतुः, खौनीहि, एषु पञ्चैव संसाध्य, चितिस्मृत्यामित्यत्रेत्संज्ञकेकारग्रहणफलम्, पॄपूरणे इत्यत्रत्यदीर्घग्रहणफलञ्च सुस्पष्टं विन्यस्यताम्। १०

१९५४

१ जातुषम् , जम्बूः, आनुलोमिकः, दैष्टिकः, गार्हपत्योऽग्निः, शून्यम् , ब्रह्मण्यम् , वारत्रंचर्म, पारिखेयी भूमिः, एषु केषांचन पञ्चानां साधनं स्पष्टं लिखत । १०

२ द्विकंसम् , अर्धिकः, दक्षिण्यः, द्विवर्षो दारकः, विधिवत्पूज्यते, यौवनम् , पारावारीणः, कौपीनं पापम् , अश्वषड्गवम् , एषु केचित् पञ्च प्रयोगाः साध्याः ।

३ एकादशम् , दैवासुरः, पूर्वी, सिध्मलः, शंयः, अवः, पूर्वेण ग्रामम् , पचतितराम् , मलिनः, एषु पञ्चानां प्रयोगाणां साधुत्वं सविग्रहं स्पष्टं ब्रूत । १०

४ पङ्क्तिर्विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् इति सूत्रोदाहरणानि स्पष्टं लिखत । १०

अथवा

चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्टः उवर्णाल्ल इलस्य च ॥

इतिश्लोकवार्तिकोदाहरणानि स्पष्टं लिखत ।

५ स्रजिष्ठः, कतमः, मुख्यः, अवाक् , मणिकः, मृत्स्ना, ब्रह्मीभवति, गतगतः, द्वन्द्वम् , अत्र पञ्चानां सूत्रोपन्यासपुरःसरं साधनं निर्दिशत । १०

१९५४

१ अतो येय इति सूत्रे सार्वधातुकपदानुवृत्तेः, कृ, सृ, भृ, वृ, इति सूत्रे क्रादिग्रहणस्य वा फलमभिधीयताम् । १०

२ ऐधिढ्वम् , जम्भते, पिप्ये, ऊयतुः, ऊर्णुनाव, अवेः, जजातः, एषु पञ्चानां सिद्धिप्रकारो लेख्यः । १०

३ दिदीये, आस्थत् , जिघाय, वव्रष्ठ, ममज्कथ, संचस्करतुः, विष्कभ्नोति, एषु पञ्चैव प्रयोगास्साधयोयाः । १०

४ ऐयरुः, क्षीणीहि, व्यष्टभत् , अश्लिक्षत् कन्यां देवदत्तः, शशासतुः, रुन्धः, अचीकृतत् , एषु पञ्चानां सिद्धिं लिखत । १०

५ दशगणा नामतो निर्देश्याः, कथञ्च तेषां तत्तन्नामेति प्रदर्श्य औननत् , अपीपटत् , कंसमजोघतत् , एषु द्वयोस्सिद्धिप्रकारस्साधु लेख्यः । १०

## १९५५

### सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१ निष्ट्यः कान्यकुब्जः, दाक्षिनगरीयम्, हैमनम्, आमावास्यः, ग्रैवेयम्, आर्क्षोदाः, एषु चतुर्णां प्रयोगाणां सविग्रहं साधुत्वं विलिख्य निवासाभिजनयोस्तारतम्यं विस्पष्टं लिखत । १०

२ ऐन्द्रायुधम्, मुद्गाः, वीवधिकी, वैशस्त्रम्, सांस्थानिकः, हृद्यः, पौरुषेयः, वारत्रम्—एषां पञ्चसु प्रयोगेषु प्रत्ययतदर्थनिर्देशपुरःसरं विधिसूत्राणि लिखत । १०

३ त्रिंशत्कः, लौकिकः, सप्तदशः, षाण्मास्यः, सान्तापिकः, शुक्लिमा, सर्वचर्मीणः, अध्वनीनः, पञ्चमः, छान्दसः—एषु पञ्चानां सिद्धिं सम्यक् प्रदर्शयत । १०

४ मतुबादिप्रत्ययाः केषु केषु अर्थेषु भवन्तीति प्रदर्श्य तेषामेकैकमुदाहरणं प्रदर्शयत । १०

५ वृक्षकः, आङ्गुलिकः, लोहितकः, मृत्स्ना—एषु प्रयोगेषु प्रत्ययैः कश्चिदर्थविशेषो गम्यते न वा ? गम्यते चेत् कतमोऽर्थः कुत्रेति प्रतिपाद्य तेषां स्वार्थिकत्वं समर्थयत । १०

## १९५५

### सिद्धान्तकौमुद्यास्तिङन्ते जुहोत्याद्यन्तभागे प्रश्नाः ।

१ बभूव, एधाञ्चक्रे, ददृदे, जजम्भ, शिश्वाय, एते प्रयोगाः विशेषसूत्राणि विनिर्दिश्य साधनीयाः । १०

२ भवतात्, अचीकमत, धिनु, अघृक्षत, जुगुप्सते, इमानि रूपाणि विशेषकार्यप्रदर्शनपूर्वकं साधनीयानि । १०

३ यासुट् परस्मैपदेषूदात्तो ङिच्चेतिसूत्रं व्याख्याय तत्र ङित्ग्रहणप्रयोजनं लिखत । १०

अथवा

कृसृभृवृस्तुद्रुस्रुश्रुवोलिटि इति सूत्रं सम्यग्व्याख्याय क्रादिनियमाकारं फलञ्च सविस्तरमुपपाद्यताम् ।

४ मार्मवानतीत्, प्रनर्दति, अप्यायि, उवोढ, जहि, एते प्रयोगाः सम्यक् साधनीयाः । १०

अथवा

भवेयुः, और्णावीत्, अजागरुः, नेनिजानि, इमान् प्रयोगान् संसाध्य, 'मारणतोषणनिशामनेषुज्ञा' इति वाक्यं सविस्तरं व्याख्यायताम्।

५ विदाङ्कुरु, ऊर्णुनाव, सुसुष्वाप, जजातः, इमानि रूपाणि संसाध्य, 'ओहाक्' धातोः लोटि मध्यमपुरुषे रूपाणि लिखत। १०

१९५६

सिद्धान्तकौमुद्याः शैषिकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः।

१ शेषार्थाः के ? कथञ्च तेषां शैषिकत्वमिति प्रदर्श्य शेषे इति लक्षणञ्चाधिकारश्चेत्यस्याभिप्रायः प्रदर्शनीयः। १०

अथवा

राङ्कवकः, श्रविष्ठः, शांशपः, वैदूर्यः, अङ्गाः, शौवस्तिकम्, वैदिकी, पैलुवहकः, अग्रिमम्, एषु पञ्चानां सिद्धिप्रकारो लेख्यः।

२ व्रीहयः, जम्बु, व्याडिः, कृत्रिमम्, वार्धुषिकः, वैभाजित्रम्, सर्वजनीनः, शतिकम्, खारीकम्—एषु चतुर्णां सिद्धिं लिख। १०

३ शतिकः, अष्टकम्, वारिपथिकम्, आर्हन्ती, स्थाविरम्, समांसमीना, वटकिनी, इन्द्रियम्—एषु चतुर्णां सिद्धिः कार्या। १०

४ वाचाटः, भूयान्, सत्या, आनुगादिकः, कृष्णीकरोति, अग्नीभवति, वीजाकरोति, राजसात् सम्पद्यते—एषु पञ्चानां सिद्धिं लिख। १०

५ एकैकमक्षरम्, एकैकयाहुत्या, गतगतः, अन्योन्यं विप्रा नमन्ति—एषां सिद्धिप्रकारो लेख्यः। १०

अथवा

द्वन्द्वं रहस्येति सूत्रस्योदाहरणप्रदर्शनपूर्वकमर्थो लेख्यः।

१९५६

सिद्धान्तकौमुद्यास्तिङन्ते जुहोत्याद्यन्तभागे प्रश्नाः।

१ भविता, एधिताहे, गोपायाञ्चकार, पिप्ये, आरिथ—एते प्रयोगा विशेषसूत्राणि विनिर्दिश्य साधनीयाः। १०

२ अभूत्, वर्त्स्यति, श्रपयति, सस्वरिव, अह्वत्—इमानि रूपाणि विशेषकार्यप्रदर्शनपूर्वकं साधनीयानि। १०

३ लेट्लकारं विहाय सर्वेषां लकाराणामर्थाः सूत्रोपन्यासपुरःसरं स्वसंस्कृतगिरा प्रतिपादनीयाः। १०

अथवा

'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सूत्रं व्याख्याय संज्ञायाः कार्यकालत्वादित्यादयः पंचकारिकाः सम्यग् व्याख्येयाः।

४ एधेरन्, त्रेपिरे धेयात्, ईजतुः—इमानि रूपाणि संसाध्य एधधातोर्लुङि मध्यमपुरुषबहुवचने कथं कति च रूपाणीति प्रतिपादनीयम्। १०

अथवा

परिषस्वजे, सिषेद्ध, अयिषीढ्वम्—इमानि रूपाणि संसाध्य, श्तिपाशपानुबन्धेनेत्यादि कारिका सम्यग् व्याख्येया।

५ अघस्रत्, चख्यौ, अजागरीत्, पिपूर्यात्, बब्धः, इमे प्रयोगाः साधूपपादनीयाः। १०

इति दरभंगामण्डलान्तर्गत 'तरौनी' ग्रामवासिपण्डितश्रीमदनन्तलालझा-शर्मात्मजपण्डितरामचन्द्रझाव्याकरणाचार्यविरचिता
तृतीयखण्डप्रश्नोत्तरी समाप्ता।

# सिद्धान्तकौमुदी—बालमनोरमा

**व्याकरणाचार्य पण्डित गोपालशास्त्री नेने कृत**

**परीक्षोपयोगी—रूपलेखनप्रकार—पङ्क्तिलेखनप्रकार आदि**

**विविध परिशिष्टों से सुसज्जित परिवर्द्धित संस्करण**

**इस संस्करण की विशेषतायें—**

इस संस्करण में—सिद्धान्तकौमुदी के जिन २ विषयों की व्याख्या बालमनोरमा टीका में स्पष्टतया प्रतिपादित है उन्ही विषयों को तत्त्वबोधिनी आदि टीकाओं में पिष्ट–पेषण मात्र किया है। इस लिये हमारे योग्य विद्वान् सम्पादक ने अन्य सभी टीकाओं की समालोचना कर जो कुछ अंश जटिल एवं प्राच्य–नव्य मत से विवादग्रस्त परीक्षोपयोगी अवशिष्ट थे ग्रन्थ में प्रयोगसाधन-पंक्तिलेखनशैली के रूप में दिखला दिये हैं जिससे 'एक पन्थ दो काज' अर्थात् परीक्षा के लेखनशैली को भी विद्यार्थी जान जांयगे और केवल कण्ठस्थ करने पर परीक्षा-महार्णव को भी अनायास से पार करेंगे तथा व्यर्थ अन्य अन्य टीकाओं के कष्ट से इस विकट परिस्थिति में अर्थ भार से बच जांयगे। [ का० १३६ ] कारकान्त प्रथम भाग ३) समासादि द्विरुक्तान्त द्वि० भाग ३) भ्वाद्यादि चुराद्यन्त तृ० भाग ३) ण्यन्तादि समाप्त्यन्त चतुर्थ भाग ३) पूर्वार्द्ध ६) उत्तरार्द्ध ६) सम्पूर्ण १२)

**संस्कृत मध्यमा एवं अंग्रेजी हाई स्कूल परीक्षा में स्वीकृत—**

# संस्कृत-रचना-प्रकाश

**रचयिता—संस्कृत प्रोफेसर श्री रमाकान्त द्विवेदी एम. ए.**

संस्कृत मध्यमा एवं अंग्रेजी हाई स्कूल की परीक्षा में पाठ्य स्वीकृत यह ग्रंथ संस्कृत से हिन्दी और हिन्दी से संस्कृत में अनुवाद के लिये आधुनिक सरल पद्धति का बहुत ही सुन्दर प्रकाशित हुआ है। इसमें प्रत्येक पाठ के अन्त में जो 'अभ्यास' दिये गये हैं वह इस ग्रन्थ की सबसे बड़ी विशेषता और अनुवाद की कुंजी है। नवीन संस्कृत शिक्षापद्धति की योजनानुसार अनेक शिक्षा संस्थाओं के विद्वानों द्वारा अनुमोदित कराकर ही यह ग्रन्थ परीक्षा में स्वीकृत किया गया है। १।।।≡)

---

**प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस।**